श्रीः ।

शास्त्रमुक्तावली—४४

महामहोपाध्याय श्रीगदाधरभट्टाचार्यविरचित

प्रत्ययार्थनिरूपणपरः



# व्युत्पत्तिवादः

## ( शब्दखण्डग्रन्थः । )



श्रीकाञ्ची प्रतिवादिभयङ्करानन्ताचार्यैः परिशोधित

श्रीसुदर्शनमुद्राक्षरशालायां मुद्रापितः ।

श्रीकाञ्ची ।

१९२१

Sastramukthavali—44

# VYUTHPATTHIVADA

BY

Mahamahopadhyaya Sri Gadadhara Bhattacharya

Edited dy

P. B. ANANTACHARYA.

*Printed at the Sri Sudarsana Press.*

CONJEEVERAM.

मूल्यं सार्धरूप्यद्वयम् ]    1921.    [ Price 2-8-0.

एवमसमानलिङ्गकस्थले विशेष्यवाचकपदासमानवचनस्यापि विशेषण पदस्य साधुत्वे तादृशस्थले औत्सर्गिकमेकवचनमेव सर्वत्र विशेषणपदान्तर प्रयोक्तुमुचितमिति 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' 'पितरौ देवताः' इत्यादेरनुपपत्तिः ।

नैवम्, यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसङ्ख्याविरुद्धसङ्ख्याया अविवक्षितत्वम्, तत्र विशेष्यविशेषणपदयोः समानवचनकत्वनियमः, अतएव 'पुरूरवआर्द्रवसौ—विश्वे देवाः' इत्यादौ द्वित्वाविशिष्टयोः पुरूरवआर्द्रव-सुभ्वोर्विशेषणतया विवक्षितत्वाद्वाचकस्य पदस्य द्विवचनान्तता । 'वेदाः प्रमाणम्' मित्यत्र च विशेषणपदोत्तरविभक्त्या बहुत्वविरुद्धमेकत्वं विवक्षितम्, तत्र प्रकृत्यर्थतावच्छेदके प्रमितिकरणत्वे ऽन्वेति । शाब्दप्रमाकरणत्वं च शब्दत्वावच्छिन्न यावच्छब्दनिष्ठमेकमेवेति नायोग्यता ।

न च "पदार्थः पदार्थेनान्वेती"ति व्युत्पत्तिविरोधः, 'सम्पन्नो व्रीहि' रित्यनेकव्रीहितात्पर्यकेऽप्येकवचनदर्शनेन तादृशव्युत्पत्तिसङ्कोचस्यावश्यकत्वात् । यदि स्वाश्रयप्रकृत्यर्थतावच्छेदकत्वसम्बन्धेन प्रकृत्यर्थ एवैकत्वान्वयः, व्रीहि त्वजातेः स्वरूपत एव व्रीह्यादिपदशक्यतावच्छेदकतया-ऽर्थतावच्छेदकरूपेणा नुपस्थितेस्तत्र पदार्थान्तरस्यान्वयानुपपत्तेरिति मन्यते, तदा प्रकृते ऽपि तादृश्येव गतिः ।

ननु "सम्पन्नो व्रीहि" रित्यादावेकवचनोपस्थितानि नानैकत्वानि प्रत्येकं नानाव्रीहिष्वन्वीयन्ते इत्युक्तस्यैव सामञ्जस्ये जातावेकत्वमानोपगमो निरर्थक इति, तदसत् । यत स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकै कधर्मवत्त्वरूपद्वितीयरहितत्वमेकवचनार्थः, न त्वेकत्वमात्रम्, तस्य वस्तुमात्रसाधारण्येनार्थत एव लाभात्, अनुपयोगाच्च । अत एव "पशुना यजेत" इत्यादौ पशुनिष्ठवादृशैकत्वस्य विवक्षितत्वादनेकपशुकरणकस्य यागस्याऽसिद्धि । साजात्यं च स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थता वच्छेदकधर्मवत्त्वरूपेण । अतो "ऽत्र घटो ऽस्ति" त्यादौ घटनिष्ठभेदप्रति-योगितानवच्छेदकैकत्वाप्रसिद्धावपि न क्षति । एतद्देशावच्छिन्नमात्रघटनिष्ठ

भेदप्रतियोगितानवच्छेदकैकत्वस्यैव तत्र बोधादिति, तस्य च प्रसिद्धत्वात्
एतद्देशे बहुघटसत्त्वदशायां तादृशवाक्यप्रयोगस्तु जात्येकत्वादेव समर्थनीय

यत्तु एकत्वाविवक्षायामपि भावाख्यातस्थले एकवचनस्य साधुत्व दर्शनात्सङ्ख्याया अविवक्षणे ऽपि 'सम्पन्नो व्रीहि' रित्यादावेकवचनोपपत्तेरक्ष जात्येकत्वपरतया तत्र समर्थनेनेति,—तदप्यकिञ्चित्करम् । भावाख्यातस्थले सङ्ख्यान्तरविरहेण विभक्तेर्निरर्थकत्वोपगमात् । तत्र च सार्थकत्वोपगमसम्भवे तत्परित्यागस्यानुचितत्वात्, सति तात्पर्ये तद्बोधस्यानुभविकत्वाच्चेति ।

एव "त्रय समुदिता हेतु" रित्यत्र हेतुपद कार्योत्पादप्रयोजकता वच्छेदकसमुदायत्वावच्छिन्नपरम्, तादृशसमुदायत्वान्वितमेकत्वमेकवचनार्थं, अत एव दण्डादीनां त्रयाणां तृणारणिमणिन्यायेन हेतुत्वशङ्कानिरास । तथा सत्येषामेकैकसमवधानदशायामपि कार्योत्पत्तेरावश्यकतया तत्त्रितयपर्याप्तसमुदायत्वस्य कार्योत्पत्तिप्रयोजकतानवच्छेदकतया तेषां त्रयाणां तथाविधैकसमुदायत्वाश्रयत्वानुपपत्ते ।

एव "जात्याकृतिव्यक्तय पदार्थ" इत्यत्र त्रितयनिष्ठस्य पदशक्तिरूपपदार्थत्वस्यैकत्वं विवक्षितमिति तत्र विशेष्यपदस्य बहुवचनान्तत्वे ऽपि विशेषणपदस्यैकवचनान्ततोपपत्ति । "प्रत्यक्षानुमाने" त्यादिसूत्रे प्रमाकरणत्वरूपप्रकृत्यर्थतावच्छेदकस्य प्रत्यक्षानुमानादिनिष्ठस्यैकतायां बाधितत्वे नाविवक्षितत्वात्प्रमाणपदस्य बहुवचनान्ततेति ।

एव " पितरः ददत " इत्यत्रापि पितृपितामहादीनां सहैव नामैकरूपेण देवतात्वनिर्देशे पितृत्वपितामहत्वादिना पृथगेव त्यागाद्युद्देश्यत्वरूपादेरागतम् । उद्देश्यतावच्छेदकभेदेनैव उद्देश्यताभेदात् । तत्र एकत्वस्याविवक्षया देवतापदस्य बहुवचनान्ततेति दिक् ।

व्युत्पत्तिकल्पनं च स्वव्याख्यादिदोषपरत्वेन प्रतिपत्तव्यमनल्पम् । तेन "दधि सुन्दर" मित्यादौ विशेष्यपदानन्तरं विभक्तेरसत्त्वे ऽपि न क्षति, तत्र विभक्त्यनुसन्धानं विना शाब्दबोधानुपगमात् ।

अथ 'नीलो घटः' 'नीलघटः' इत्यादिद्विविधबोधसाधारणं स्वोत्तरपदभिन्नपदानुत्तरत्वविशिष्टस्वोत्तरत्वादिरूपस्वाव्यवहितोत्तरत्वसम्बन्धेन नीलादिपदवत्सुबन्तघटादिपदत्वमेव तथास्त्विति चेन्न । 'नीलघटस्य' मित्यादिसमासाधारण्यानुरोधेनान्यादृश्या अपि आकाङ्क्षाया समासस्थले उपगन्तव्यतया उपदर्शितसमासव्याससाधारणानुगताकाङ्क्षानुसरणस्याप्रयोजकत्वादिति ।

अथ 'नीलं घटमानये' त्यादौ नीलादेर्घटादावन्वयोपगमे नीलादिपदोत्तरविभक्त्यर्थकर्मत्वादेः कुत्रान्वय इति चेन्न कुत्रापि । विभक्तिपदसाधुत्वार्थमेव प्रयुज्यते । अभेद एव वा विशेषणविभक्तेरर्थः, अभेदस्य संसर्गमर्यादया भानं तु समासस्थल एव । तन्न उक्तविभक्त्यनुसन्धानं विनापि शाब्दबुद्धेरनुभविकत्वादित्यपि वदन्ति ।

अथैतन्मते अभेदो यदि भेदत्वावच्छिन्नाभावस्तदाऽप्रसिद्धिः, यदि च भेदप्रतियोगिकोऽभावः, तदा 'नीलं जल' मित्यादिवाक्यस्यापि प्रामाण्यापत्तिः । जले द्वित्वादिना नीलभेदाद्यभावस्य सत्त्वात् । नीलभेदत्वावच्छिन्नाभावस्य विभक्त्यर्थत्वे नीलादिपदार्थानन्वयप्रसङ्गः । न च भेदप्रतियोगिकाभाव एव विभक्त्यर्थः, नीलपदसमभिव्याहारान्नीलभेदत्वावच्छिन्नाभावः प्रतीयते इति वाच्यम्; पदार्थद्वयसंसर्गभानस्यैवाकाङ्क्षानियम्यत्वान्नीलभेदत्वावच्छिन्नप्रतियोगितान्तर्भावेण वृत्तिं विना भेदरूपपदार्थतावच्छेदकस्याभाने तादृशसम्बन्धेन भानासम्भवात् ।

मैवम् — भेदोऽभावश्च विशेषणविभक्तेरर्थः, विशिष्टलाभस्त्वाकाङ्क्षादिवशात् । एतेन भेदे नीलादिपदार्थान्वये एकदेशान्वयप्रसङ्ग इति निरस्तम् ।

न च विशेषणविभक्तेरभेदार्थकत्वे 'नीलं घट' इत्यादावप्यभेदान्वयबोधापत्तिः — 'धान्येन धनवा' नित्यादौ तृतीयया अभेदबोधनात् अभेदप्रकारकबोधे विरुद्धविभक्तिराहित्यस्यानपेक्षणादिति वाच्यम् । द्वितीयादिना ऽभेदबोधने द्वितीयाद्यन्तविशेष्यवाचकपदसमभिव्याहारस्य प्रयोजकत्वमित्युपगमात् ।

विशिष्टबुद्धित्वानुपपत्ते । प्रतियोगिविशेषितामावशान च विशिष्ट
ाधिमर्यादानातिशेवइति दर्शनात्केवल "विशेष्ये विशेषण" मिति रीत्या
ऽभ्युपैतीति चेत्,–

ात्म्यम् । अभेदस्तादात्म्यम्, तच्च स्ववृत्त्यसाधारणो धर्म । असाधारण्य
मात्रवृत्तित्वम । तच्च स्वसामानाधिकरण्यस्वप्रतियोगिवृत्तित्वोभय
भेदविशिष्ट यत्तदन्यत्वमित्येकमात्रवृत्तिधर्म एव विशेषणविभक्तेरर्थ ।
ात्र प्रकृत्यर्थस्य संसर्गमर्यादया भासते । तादृशधर्मस्तत्तद्व्यक्तित्वादरूप
अनुगतव्यक्तित्वाद्याकतादृशधर्मस्य निशिष्य ज्ञातुमशक्यत्वे व्येकमात्रवृत्ति-
ना सामान्यप्रत्यासत्ति सुग्रहत्वमेव । अभेदस्य संसर्गतामते
ानुगताभेदस्यैव तथात्वमुचितम् । तत्तद्व्यक्तित्वावच्छिन्नभेदाभाव
विशिष्य तथात्वे 'घटो न नील' इत्यादिवाक्यजन्यबोधे "प्रति
ान्वयौ च तुल्ययोगक्षेमा"विति न्यायेन तादृशाननुगतसम्बन्धा
तियोगिताकाननुगताभावा एव भासेरन्, न तु नीलवृत्तिरेको
तथा सति यत्किञ्चित्तादृशाभावतात्पर्येण प्रयुक्तस्य नीले ऽपि
' इत्यादिवाक्यस्य प्रामाण्यं स्यात् ।

वस्तु बोध्यम् । विशेषणविभक्तेरभेदार्थकत्वे घटो न नील इत्यादौ
सत्वभेदाभाव एव प्रत्ययविषयो न तु नीलादिभेद । यादृश
दृशस्थले येन सम्बन्धेन यत्र धर्मिणि येन रूपेण यद्वत्त्व नञसत्त्वे
तादृशस्थले नञा तद्धर्मिणि तादृशसम्बन्धावच्छिन्नतादृश
नप्रतियोगिताकतदभावबोधस्य व्युत्पत्तिसिद्धत्वात् । "प्रतियोग्य
नेऽ"त्यादेरप्ययमेवार्थ । एवं च नञो भेदबोधकत्वं न कुत्रापि
। 'अनाल घटमानये'त्यादौ घटपदसामानाधिकरण्यानुरोधेन
स्य नीलभिन्नपरतया नञो भेदवत्येव लक्षणाया उपगन्तव्यत्वात् ।

इत्यत्राव्येयम्, अभेदस्य प्रकारताभ्येऽपि 'घटो न नील'
स्वस्य नीलाभेदाभाव बोधकत्वेऽपि तृतीयाभावस्य प्रतियोगि
' नञो भेदबोधकत्व नानुपपन्नम्, परन्तु भेदत्व प्रकारेण भेदबोधो
... ।

इदं तु तत्त्वम् । 'नीलो घट' इत्याद्यसमासस्थले ऽभेदस्य संसर्गतोपगमे ऽपि गौरवविरहात् तत्र विशेषणविभक्तेः शक्तिकल्पनमनुचितम् । न च यत्राभेदे विशेषणविभक्तेः शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र सर्वमतएवाभेदप्रकारकबोधस्य नीलो घट इत्यादिवाक्यादुत्पत्त्या तादृशसमभिव्याहारज्ञानस्य द्विविधबोधे हेतुताद्वय कल्पनीयमभेदस्य संसर्गतावादिने इति गौरवम् । एवं तादृशसमभिव्याहारज्ञानघटितसामग्र्या भिन्नयोग्यताज्ञानघटितत्वेन द्वैविध्यमिति भिन्नविषयकप्रत्यक्षादिकं प्रति तादृशशाब्दसामग्रीप्रतिबन्धकताया अप्याधिक्यमिति वाच्यम् । संसर्गतावादिनोक्तस्थलेऽपि तत्तत्संसर्गकबोधस्यैवोपगमादिति दिक् ।

"स्तोकं पचति, मृदु पचती" त्यादौ विरुद्धविभक्त्यरुद्धपदोपस्थापितस्यापि स्तोकमृद्वादेर्धात्वर्थपाकादावभेदान्वयो व्युत्पत्तिसिद्धः, तदनुरोधेन च द्वितीयान्तपदधातुपदयोः समभिव्याहारस्याप्यभेदान्वयबोधौपयिकाकाङ्क्षात्वमुपगम्यते ; क्रियाविशेषणस्थले च न द्वितीयातिरिक्तविभक्तिरुत्पद्यते, "क्रियाविशेषणानां क्लीबत्वं कर्मत्वञ्चे"त्यनुशासनेन तत्र कर्मत्वातिदेशात् ।

न चैवं 'स्तोकः पाकः' इत्यादावपि द्वितीयाप्रसङ्गः, तत्रापि स्तोकादेः क्रियायामेव विशेषणत्वात् । भावकृतो प्रयोगसाधुत्वमात्रार्थकतया धातुनैव तत्र पाकादि प्रतिपादनादिति वाच्यम्, क्रियापदस्य तत्र सार्थकप्रत्ययान्तधातुपरस्याप्यार्थपरत्वात् ।

'स्तोकं स्थीयते' इत्यादौ आख्यातस्यापि वर्तमानत्वार्थकतया सार्थकत्वात् । न च वर्तमानत्वाद्यविवक्षाया द्वितीयानुपपत्तिरिति वाच्यम् ; वर्तमानत्वादिविवक्षास्थलइव अर्थबोधप्रयोजकाकाङ्क्षाशालित्वेनैव तदविवक्षास्थले ऽपि भावाख्यातस्यार्थवत्त्वात् ।

के चित्तु-धातोरिव घञन्तस्यापि पाकादौ शक्तिरिष्यते । अन्यथा सुविभक्त्यर्थसंख्याकर्मत्वादीनां तत्र पाकादावन्वयानुपपत्तेः, प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तेर्घञा च सुविभक्त्यप्रकृतित्वात् ।

प्रकृत्येकदेशार्थेऽपि प्रत्ययार्थान्वयोपगमे 'पचन्तं पश्यती'त्यादितः 'पच-
मानं पश्यती'त्यादितश्च पाकादौ द्वितीयार्थकर्मत्वाद्यन्वयबोधप्रसङ्गात् ।
एकविशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वेनान्वयस्याव्युत्पन्नतया तत्र प्रत्य-
यार्थविशेषणपाकादेर्न कर्मत्वे विशेषणतयान्वय इति चेत्, तथापि पाकादिविशे-
षणतया सुप्प्रत्ययार्थान्वयसम्भवात् यत्र पाककर्त्रादावद्वित्वादिकं बाधितम्
पाकादेश्च तदबाधितम्, तत्र 'पचन्तौ पश्यति', 'पचमानौ पश्यती'त्यादिप्रयो-
गप्रसङ्गस्य दुर्वारत्वात् । धात्वर्थस्याख्यार्थे सुबर्थान्वयबोधं प्रति तत्तदुत्तर-
प्रत्ययधर्मिककिञ्चिदर्थपरत्वज्ञानस्य प्रतिबन्धकतामुपगम्यैतादृशातिप्रसङ्गवारणे
च गौरवात् । एवं 'शोभनं पचन'मित्यादौ धातुमात्रेण पाकानुपस्थितौ च
तत्र शोभनाद्यभेदान्वयबोधानुपपत्तिः, विशेषणविभक्तिसजातीयविभक्तिप्रकृत्यनुप-
स्थापितत्वात् । प्रकृत्येकदेशसाधारणतादृशविभक्तिप्रकृतित्वस्य प्रयोजकत्वे
तत्र ल्युडादेरधिकरणपरत्वेऽपि तथाविधान्वयबोधापत्तेः । कस्यचित्प्रति-
बन्धकतां कल्पयित्वा तद्वारणे च गौरवात् । न चैवमुपकुम्भार्द्धपिप्पल्यादि-
रूपपूर्वपदार्थप्रधानसमासपदात् कुम्भसमीपपिप्पल्यर्द्धादौ विभक्त्यर्थान्वयस्य
प्रातिपदिकान्तरार्थाभेदान्वयस्य चानुपपत्तिः । पूर्वपदस्य समासोत्तरविभक्त्य-
प्रकृतित्वादिति वाच्यम्, तदनुरोधेनैव तत्र कुम्भपिप्पल्यादिपदानामेव
कुम्भसमीपपिप्पल्यर्द्धादौ लक्षणाया पूर्वपदस्य तात्पर्यग्राहकमात्रोपयोगितायाश्च
स्वीकारात् । वस्तुतस्तु, तत्रोत्तरपदार्थविशेषितपूर्वपदार्थसमीपाद्यर्द्धादौ प्रत्य-
यार्थान्वयबोधे तादृशसमस्तपदप्रत्ययपदयोरव्यवहितपूर्वापरीभावरूपाकाङ्क्षा । एवं
तत्र प्रातिपदिकान्तरार्थाभेदान्वयबोधे समानविभक्तिकयोस्तादृशसमस्तपद-
पदान्तरयोश्च समभिव्याहाररूपाकाङ्क्षा, तथा चातिप्रसङ्गविरहात् ।
धात्वर्थपाकादौ प्रत्ययार्थान्वयबोधे प्रातिपदिकान्तरार्थाभेदान्वयबोधे च ल्युट्-
घञाद्यन्तसमुदायप्रत्यययोरानुपूर्वीरूपाव्यवहितपूर्वापरीभावस्य समानविभक्तिकयो-
स्तादृशसमुदायपदपदान्तरयोः समभिव्याहारस्य चाकाङ्क्षात्वोपगमे दर्शिताधिक-
रणार्थकल्युट्प्रत्ययस्थलीयातिप्रसङ्गस्य दुर्वारतया न तत्सम्भवः । अथ घञन्त-
समुदायस्य पाकाद्यर्थकत्वे घञन्तसमुदायस्य संयोगविभागत्वादिविशिष्टवा-
चकत्वं व्युत्पाद्य संयोगविभागादिपदानां नैमित्तिकसंज्ञात्वानिराकरणं दीधि

तिकृता विरुद्धमिति चेत्, का क्षति । न हि कस्य चिद्धात्वर्थकृता विप रीतलेखन युक्तिबलादस्तुसिद्धौ बाधकम् । एवं च यत्र धातुमात्रस्यैव पाकादौ तात्पर्यं तत्र तद्विशेषणवाचकपदात् द्वितीयैव । यत्र तु कृदन्तसमु दायस्य पाकादौ तात्पर्यम्, तत्र तादृशपदं तथाविधकृदन्तसमुदायसमा नविभक्तिकमेव । तदुक्तं कातन्त्रपरिशिष्टकृता—" कथं स्तोकं पाकः ? कृदन्तविशेषणत्वात् " । धात्वर्थैकाधिकरण्ये तु स्तोकमोदनस्य पाक इति स्यादेवेति बदन्ति ।

तदर्थैकपदोत्तरविभक्त्या सङ्ख्याबोधने ऽभेदसंसर्गावच्छिन्नप्रकारता भिन्नतदर्थविषयताशालिशाब्दबोधसामग्री अपेक्षिता । तादृशश्च बोधस्त दर्थविशेष्यकस्तदर्थनिरूपितभेदान्वयविषयकश्च । ' नीलौ घटौ ' इत्यादौ च विशेष्यवाचकपदोत्तरविभक्त्यैव द्वित्वादिकं प्रत्याय्यते । एवं च क्रिया विशेषणवाचकपदोत्तरविभक्त्या अन्वयितेऽपि द्वित्वबहुत्वयोः प्रत्या यनासम्भवात्तादृशपदोत्तरमौत्सर्गिकमेकवचनमेव माबाद्यातस्थल्वादित्य वधेयम् ।

अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेति व्युत्पत्तिः । ' घटो घटः, ' ' दण्डवान् दण्डवान्, ' ' पाकं पचति ' इत्यादौ घटत्वदण्डवत्त्वपाकत्वाद्यवच्छिन्ने तत्तद्धर्मावच्छिन्नस्य तथाविधान्वयबोधानुदयात् ।

अथ तत्प्रयोजकसमानविभक्तिकवादे तत्वात्कथं न तादृशान्वय बोध ?—अत्राहुः—यादृशपदं क्वचित्प्रसिद्धमिति तादृशस्यैवापत्तिः सम्भवति, फलसत्वाम्प्रसिद्धत्वात् । यादृशं च सर्वथैवाप्रसिद्धम् तादृशस्य चापादना प्रसिद्धत्वापत्तिरशक्यैवेति घटत्वावच्छिन्नविशेष्यताकाभेदसंसर्गकघटत्वावच्छिन्नप्रकारकशाब्दबोधस्य क्वचिदप्यनुदयात्कथं तदापत्तिः ।

अथ—'घटो नीलघटः, दण्डवान् रक्तदण्डवान्' इत्यादौ तादृशशाब्दबोधस्य प्रसिद्धिः विधेयकोटावधिकावगाहिनः शाब्दबोधस्य नवीनैः स्वीकारादिति चेत्, तर्हि घटांशे विशेषणतावच्छेदकविधया नीलादिभाननियामकतालाद्युप स्थितितात्पर्यज्ञानविरहादिघटितैव सामग्री घटत्वावच्छिन्नविशेष्यकनीलघट

त्वाद्यवच्छिन्नाभेदान्वयबोधप्रयोजिका, तदभावादेव 'घटो घट' इत्यादिषु न तादृशशाब्दबोधापत्तिरिति केचित् ।

अथ द्रव्यत्वादौ धर्मितावच्छेदकतासंसर्गेण प्रसिद्धस्य शुद्धघटत्वावच्छिन्नप्रकारकाभेदान्वयबोधस्य घटत्वादावापत्तिरसम्भव । न च तथाऽऽपादकाभाव, तात्पर्यज्ञानविशेषादिघटितायाः धर्मितावच्छेदकताया द्रव्यत्वादौ तदुत्पादनियामकसामग्र्या एवापादकत्वात् । न च धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वादौ तादृशान्वयबोधोत्पत्तिप्रयोजिका द्रव्यपदजन्यद्रव्यत्वावच्छिन्नविशेष्यकोपस्थितितदवच्छिन्नविशेष्यकयोग्यताज्ञानादिघटितसामग्र्येव, धर्मितावच्छेदकतायास्तत्पर्यतावच्छेदकसम्बन्धताविरहेऽपि द्रव्यत्वादिनिष्ठायास्तत्पर्यतावच्छेदकधर्मघटकत्वात् तादृशसामग्र्या आत्मनिष्ठप्रत्यासत्त्या द्रव्यत्वाद्यवच्छिन्नविशेष्यकघटत्वावच्छिन्नाभेदबुद्धित्वरूपस्वीयकार्यतावच्छेदकावच्छिन्नापत्तेरव्याप्यतया घटत्वादौ धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नाभेदबोधापादकत्वं न सम्भवतीति वाच्यम्, योग्यताज्ञानस्य धर्मितावच्छेदकनिवेश्य तद्भेदेन अनन्तकारणताकल्पनमपेक्ष्य लाघवाद्धर्मितावच्छेदकतासम्बन्धेन शाब्दबुद्धौ तादृशसम्बन्धेन तस्य धर्मितावच्छेदकमनिवेश्य हेतुताकल्पनस्यैव युक्तत्वात् । घटत्वादिधर्मितावच्छेदकघटत्वाद्यवच्छिन्नप्रकारस्ययोग्यताज्ञानबलादेव घटत्वादौ धर्मितावच्छेदकतासम्बन्धेन तदापत्ते ।

न च योग्यताज्ञानस्य धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या हेतुत्वोपगमे द्रव्यत्वाद्यवच्छिन्नस्य पदादनुपस्थितत्वेऽपि द्रव्यत्वादौ तादृशप्रत्यासत्त्या प्रत्यासन्नयोग्यताज्ञानात्तत्र तादृशप्रत्यासत्त्या शाब्दबोधापत्ति । आत्मनिष्ठप्रत्यासत्त्या हेतुभूता द्रव्यत्वाद्यवच्छिन्नोपस्थितिमन्तरेणापि तादृशप्रमेयत्वाद्यवच्छिन्नोपस्थित्यादिदशायां प्रमेयत्वादौ धर्मितावच्छेदकतासम्बन्धेन ज्ञानस्य फलजनकत्वात्तादृशद्रव्यत्वाद्यवच्छिन्नोपस्थितिविरहस्याकिञ्चित्करत्वादिति वाच्यम्, समानप्रकारताप्रत्यासत्त्या पदार्थोपस्थितेर्न शाब्दबोधे हेतुत्वोपगमात् । येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यं प्रति येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यस्य व्यापकता, तेन सम्बन्धेन तद्धर्मावच्छिन्नकार्योत्पादकसामग्र्या अपि तेन

सम्बन्धेन तद्धर्मावच्छिन्नधर्मितावच्छेदकतया प्रकारतासम्बन्धेन द्रव्यत्वादौ द्रव्यपदजन्यपदार्थोपस्थितेः सत्त्वे तत्र धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधापत्तेरयोगात् ।

न च यत्र प्रमेयत्वाद्यवच्छिन्नविशेष्यकवृत्तिज्ञानजन्यप्रमेयत्वाद्यवच्छिन्नविशेष्यकोपस्थितावेव उद्बोधकान्तरात् द्रव्यत्वाद्यवच्छिन्नस्य भानम् तत्र द्रव्यत्वाद्यवच्छिन्नविषयकशाब्दापत्तिवारणाय तद्धर्मावच्छिन्नविशेष्यकशाब्दे च प्रति तद्धर्मावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यतद्धर्मप्रकारकपदार्थोपस्थितेर्हेतुता वाच्या, तथा च प्रकारविशेषनिवेशस्यावश्यकत्वे विषयनिष्ठप्रत्यासत्त्या हेतुताकल्पनमयुक्तम्, तथा सति पुरुषभेदेन कार्यकारणभावयोः प्रसङ्ग इति वाच्यम्, स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकता-निष्ठप्रकारतासम्बन्धेनोपस्थितेर्हेतुता स्वीकृत्य तादृशापत्तेर्वारणात् ।

न च पदार्थेऽपि प्रकारतासम्बन्धेन शाब्दबोधोत्पत्त्या तत्र तादृशप्रकारतासम्बन्धेन पदार्थोपस्थितेरभावात्प्रकारनिष्ठप्रत्यासत्त्या पदार्थोपस्थितेर्हेतुता व्यभिचारेण कल्पयितुमशक्यमिति वाच्यम्, परामर्शकारणताव्यभिचारदर्शितादृशव्यभिचारस्य वारणीयत्वादिति चेत्, तर्हि तद्धर्मावच्छिन्नभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदस्यापि हेतुताया स्वीकरणीयतया न ‘घटो घट’ इत्यादिस्थले शाब्दबोधापत्तिः । ‘स घट’ इत्यादिवाक्याज्जायमाने तत्त्वादौ घटत्वादिधर्मितावच्छेदकस्य स्वरूपतो घटत्वादिप्रकारतावच्छेदकस्य ‘घट स’ इत्यादिवाक्याज्जायमाने तत्त्वादौ घटत्वादिधर्मितावच्छेदकस्य जायमाने शाब्दबोधे तत्त्वप्रकारतावच्छेदकस्य शाब्दबोधस्योपपत्तये विशेष्यताप्रकारतयोरवच्छेदकतायां निरवच्छिन्नत्वेन विशेषणीये । ‘घटो नीलघट’ इत्याद्यन्वयबोध इष्ट प्रामाणिकत्वस्यात्र दर्शितत्वात् सोऽप्युपपादनीय । ‘स स’ इत्यादिवाक्याज्जायमाने तत्त्वावच्छिन्नधर्मितावच्छेदकतानिरूपिततद्धर्मावच्छिन्नप्रकारतावच्छेदकताकाभेदान्वयबोधस्य वारणाय तद्धर्मावच्छिन्नावच्छेदकताकप्रकारतानिरूपितधर्मितावच्छेदकतावच्छेदकत्वप्रत्यासत्त्या शाब्दं च प्रति तद्धर्मभेदस्यापि पृथक्कारणत्वं कल्पनीयम् ।

अथ 'राजा पुरुष' इत्यादौ पदार्थोपस्थित्यादिसत्त्वेन कथन्न भेदान्वयबोध, सामग्र्या कार्यजनने उक्तनियमभङ्गरूपाय प्रयोजनक्षतेरकिंचित्करत्वात्, सामग्रीसत्त्वे अवश्य कार्यमिति नियमात् । न च तत्र भेदान्वयबोधोपयिकाकाङ्क्षाविरहाच्छाब्दसामग्र्येव सिद्धेति वाच्यम्, सम भिव्याहाररूपाकाङ्क्षायास्तत्रापि सत्त्वात् । न च तादृशाकाङ्क्षायास्तत्र सत्त्वे ऽपि राजादिपदार्थप्रकारकभेदान्वयबोधे राजादिपदोत्तरहेतोत्तरडस• पदत्वरूपानुपूर्वीविशेषरूपाया आकाङ्क्षाया अपि प्रयोजकत्वात्, तदभावादेव न तत्र शाब्दसामग्रीति वाच्यम्, सम्बन्धादिविशेष्यकराजादि प्रकारकान्वयबोधएव तादृशाकाङ्क्षाज्ञानस्य हेतुतया पुरुषादौ राजादिपदार्थ प्रकारकान्वयबोधोत्पत्तौ तादृशाकाङ्क्षाज्ञानरूपकारणविरहस्याकिञ्चित्करत्वात् ।

अत्र केचित्—नामार्थप्रकारकभेदान्वयबोध प्रति समानविशेष्यता प्रत्यासत्त्या प्रत्ययजन्योपस्थितेर्हेतुत्वकल्पनात् नामार्थप्रकारकभेदान्वयबोधे विशेष्यतया प्रत्ययार्थस्यैव भानम्, न तु नामार्थान्तरस्य, तत्र विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितेरसत्त्वात् । न च सम्बन्धादेरपि नामार्थतया तत्प्रकारकान्वयबोधे पुरुषादिपदार्थस्य विशेष्यतया भानानुपपत्ति, तत्तन्नामपदजन्य• तन्नामार्थप्रकारकशाब्दत्वावच्छिन्न प्रति प्रत्ययजन्योपस्थितित्वेन हेतुत्व ऽपि 'राजसम्बन्धः प्रमेय, राज पुरुष' इत्येतादृशवाक्यद्वयजन्यवाक्या• र्थद्वयान्वयबोधे पुरुषस्य राजसम्बन्धविशेष्यतया भानानुपपत्तिरिति वाच्यम्, प्रत्ययाधीनतत्तत्पदार्थोपस्थित्यजन्यतदर्थप्रकारकशाब्दत्वावच्छिन्न प्रत्येव प्रत्य यजन्योपस्थिते समानविशेष्यताप्रत्यासत्त्या हेतुत्वोपगमात् । अथैवमपि यत्र 'राजा पुरुष' इत्यत्र पुरुषपदाधीनपुरुषोपस्थितौ प्रत्ययवशात्कश्चि त्प्रत्ययार्थो ऽपि विषयीभूत, तत्र प्रत्ययजन्यतथाविधसमूहालम्बनोपस्थि तेर्विशेष्यतासम्बन्धेन पुरुषे ऽपि सत्त्वात्तस्य राजप्रकारकान्वयबोधे विशेष्यतया भानापत्तिर्दुर्वारैव । न च प्रत्ययजन्यतावच्छेदकीभूतविशेष्यता सम्बन्धेनोपस्थितेर्हेतुत्वोपगमान्नानुपपत्ति, तादृशसमूहालम्बनोपस्थितिनिरू• पितपुरुषनिष्ठविशेष्यताया नाम्न एव जन्यतावच्छेदकत्वादिति वाच्यम्; ज्ञानभेदेन विशेष्यताभेदाभावात्, यत्र कुत्र चित्प्रत्ययादेव लक्षणादिना

पुरुषाद्युपस्थितिभिन्ना तादृशोपस्थितिनिरूपितप्रत्ययजन्यतावच्छेदकीभूतविशे-
ष्यताक, पुरुषादिपदजन्यपुरुषाद्युपस्थितिनिरूपितविशेष्यतया अभिन्नतया तावता-
ऽप्युक्तातिप्रसङ्गवारणासम्भवादिति चेन्न, —स्वजनकज्ञानीयप्रत्ययवृत्तिप्रका-
रतानिरूपितविशेष्यताविशिष्टविशेष्यतासम्बन्धेनैवोपस्थितेर्हेतुतयोक्तसमूहालम्बनो-
पस्थितिनिरूपितपुरुषनिष्ठविशेष्यतायाश्च तादृशोपस्थितिजनकज्ञानीयप्रत्ययवृत्ति
प्रकारतानिरूपितविशेष्यताभावात्तदधिकरणत्वविरहान्नातिप्रसङ्ग इति वदन्ति ।

तदसत्, प्रत्ययत्वस्यानुगतस्यातिप्रसक्तस्य दुर्वचतया उक्तकार्य-
कारणभावकल्पनाया असम्भवात् । 'राजसम्बन्धी पुरुषः' इत्यादौ
सम्बन्ध्यादिपदे तत्पुरुषत्वादिभ्रमदशायां सम्बन्ध्यादिविशेष्यकराजादिपदार्थ
प्रकारकान्वयबोधानुपपत्तेः । 'राज्ञः पुरुषः' इत्यादौ तत्पदादिषु सम्बन्ध्यादि
पदत्वभ्रमदशायां सम्बन्धिनि राजादिप्रकारकान्वयबोधापत्तेश्च ।

न च प्रत्ययत्वेन ज्ञातं यत्पदं तत्पदजन्योपस्थितेः कारणत्वादेतद्दो-
षद्वयस्य नावकाश इति वाच्यम्, 'राज्ञः पुरुषः' इत्यादौ षष्ठ्यादेः
प्रत्ययत्वाद्युपस्थितिदशायामपि आनुपूर्वीविशेषप्रकारकज्ञानाधीनतदर्थोपस्थिति-
सत्त्वे शाब्दबोधोदयात् प्रत्ययत्वप्रकारकज्ञाननिवेशासम्भवात् ।

इदं पुनरत्र तत्त्वम्—'राजा पुरुषः' इत्यादौ पुरुषादिविशेष्यक-
राजादिप्रकारकभेदान्वयबोधस्याऽप्रसिद्ध्यैव नापत्तिसम्भवः । यत्र षष्ठ्यादि
विभक्तेरेव स्वार्थलक्षणया शक्तिभ्रमेण वा पुरुषाद्युपस्थितिस्तत्र तद्वि
शेष्यकराजादिपदार्थप्रकारकभेदान्वयबोधः प्रसिद्ध इति चेत्, तर्हि तादृशबोधे
तथाविधप्रकृतिप्रत्ययानुपूर्वीविशेषरूपाकाङ्क्षाज्ञानसहकृततत्तद्विभक्तिजन्य पुरुषा
द्युपस्थितिघटितसामग्र्या एव तादृशबोधोत्पत्तिनियामकतया तदभावादेव
न तदापत्तिः । अत एव स्वत्वादिसम्बन्धेन राजादिविशिष्टपुरुषादिता
त्पर्यकतदादिपदघटितात् 'स सुन्दरः' इति वाक्यात्पुरुषादिविशेष्यक
स्वत्वादिसंसर्गकराजादिप्रकारकशाब्दबोधस्य च प्रसिद्ध्या 'राजा पुरुषः
सुन्दरः' इत्यादौ पदार्थोपस्थितियोग्यताज्ञानादिबलात्तादृशशाब्दबोधापत्ति
रित्यपि निरस्तम्, 'स सुन्दरः' इत्यादिवाक्याधीनशाब्दबोधसामग्र्या

स्तत्पदत्वावच्छिन्नविशेष्यकसुन्दरादिपदसमभिव्याहारज्ञानसहकृततदादिपदजन्य तादृशविशिष्टार्थोपस्थितिघटिततया तदभावादेवापत्त्यभावात् ।

अथैतादृशरीत्यापत्तिवारणे 'राज्ञः पुरुषः' इत्यादौ स्वत्वादिसम्बन्धेन पुरुषादौ राजान्वयबोधस्वीकारे ऽपि क्षतिविरहाद्दुक्तव्युत्पत्तिर्निर्युक्तिका । विभक्तीनां सम्बन्धादिवाचकत्वमपि निर्युक्तिकम्, 'नीलो घटः' इत्यादौ विशेषणवाचकपदसमभिव्याहृतविभक्तेरिव सर्वविभक्तीनां साधुत्वमात्रार्थकत्वस्यैवोचितत्वात् । न हि तत्र तथाविधान्वयबोधोपगमे तत्स्थलीयसामग्रीसत्त्वात् 'राजा पुरुषः' इत्यादिष्वपि तथाविधान्वयबोधप्रसङ्गः सम्भवति । तत्स्थलीयसामग्र्याः प्रथमान्तराजपदत्वावच्छिन्नधर्मिकपुरुषादिपदसमभिव्याहाररूपाकाङ्क्षाज्ञानघटिततया तदभावादेव तत्र तादृशसामग्र्या अभावात् । एवं च 'राजपुरुषः' इत्यादिसमासे राजादिपदस्य राजसम्बन्ध्यादिलक्षणास्वीकारो ऽपि व्यर्थः, तत्र भेदान्वयबोधस्वीकारे ऽपि क्षतिविरहात् ।

न च तत्र भेदान्वयबोधाभ्युपगमे तत्स्थलीयसामग्रीसत्त्वात् 'राजा पुरुषः' इत्यादावपि तादृशान्वयबोधापत्तिरिति वाच्यम्, तत्स्थलीयशाब्दबोधे राजपदाव्यवहितोत्तरपुरुषादिपदत्वरूपानुपूर्वीविशेषज्ञानस्य हेतुतया ऽसमासस्थले पुरुषादिपदस्य विभक्त्या राजादिपदव्यवहितत्वात्तादृशानुपूर्वीविशेषज्ञानासम्भवेन तत्र तादृशबोधसामग्र्या असिद्धेः

न च प्रकृतिप्रत्यययोरानुपूर्वीविशेषरूपस्याकाङ्क्षात्वात्प्रातिपदिकद्वयाव्यवधानघटितोक्तानुपूर्वीविशेषज्ञानस्य हेतुत्वमेव निष्प्रमाणमिति वाच्यम् । भवन्मते ऽपि 'राजपुरुषः' इत्यादौ तादृशसामग्रीसत्त्वाद्राजपदार्थराजसम्बन्धिपुरुषपदार्थयोरभेदान्वयबोधः, तादृशसामग्रीसत्त्वात् 'राज्ञः पुरुषः' इत्यादावपि राजादिपदस्य राजसम्बन्ध्यादौ लक्षणाग्रहदशायां तादृशाभेदान्वयबोधप्रसङ्गवारणाय तथाविधानुपूर्वीविशेषज्ञानस्य समासजन्यबोधे हेतुताकल्पनस्यावश्यकत्वात् । अस्माभिर्भेदान्वयबोध एव तादृशानुपूर्वीविशेषज्ञानस्य हेतुतायाः कल्पनीयत्वात् । न चोभयमत एव राजसम्बन्धिनि राजपदस्य स्वारसिकलक्षणाग्रहेण 'राजपुरुषः' इत्यत्र राजसम्बन्धिपुरुषयोरभेदान्वयबोधो भवति ।

इयांस्तु विशेषो यदस्मन्मते ऽसौ समासः षष्ठीतत्पुरुषो भवन्मते कर्मधारय इति । एवं च पुरुषविशेष्यकाभेदसंसर्गकराजप्रकारकबोधे राजपदाव्यवहितोत्तरवर्त्तिपुरुषपदत्वप्रकारकज्ञानत्वेन हेतुत्वमुभयवादिसिद्ध मेव, भेदान्वयबोधे तादृशानुपूर्वीज्ञानहेतुताकल्पनमधिकमिति वाच्यम्, उक्त भेदान्वयबोधे तथाविधानुपूर्वीज्ञानहेतुतायाः पर्यायशब्दान्तरघटितानुपूर्वीज्ञान जन्यतथाविधान्वयबोधे व्यभिचारवारणाय तादृशानुपूर्वीज्ञानानन्तर्यस्य कार्यता वच्छेदककोटावन्वयस्य निवेशनीयतया तत्र विनिगमनाविरहे प्रयोजनाभावेन तादृशकार्यतावच्छेदकस्यैव भेदान्वयबोधसाधारण्यतानुपूर्वीज्ञानस्य भेदान्वय बोधे हेतुताया अनाधिक्यात् ।

एवम् 'तण्डुलं पचती' त्यादावपि पाकादिरूपधात्वर्थे कर्मत्वादि सम्बन्धेन तण्डुलादेरन्वयबोधः स्वीकर्तुमुचितः । कर्मत्वस्य पाकाद्यो प्रकारत्वे तत्र तत्र द्वितीयादेः शक्तिकल्पने तादृशवाक्यजन्यशाब्दबोधे कर्मत्वादिसंसर्गस्याधिकस्य विषयताकल्पने च गौरवात् । 'तण्डुलः पचती' त्यादिवाक्यजन्यशाब्दबोधसामग्रीबलात् 'तण्डुलं पचती' त्यादावपि तथा विधान्वयबोधापत्तिस्तु न सम्भवति । तादृशान्वयबोधे द्वितीयान्ततण्डुल पदत्वावच्छिन्नधर्मिक 'पचती' त्यादसमभिव्याहारज्ञानस्य हेतुतया 'तण्डुल पचती' त्यादौ तादृशसामग्र्या अप्रसक्तेः ।

एवम् 'पचति चैत्र' इत्यादावपि कृतिसम्बन्धेन पाकादेश्चैत्रादावन्वयबोधस्वीकार उचितः, अन्यथोक्तरीत्या गौरवात्, न च तादृशान्वय बोधस्वीकारे तत्सम्बन्धित्वसामग्रीबलात्, 'पच्यते चैत्र' 'पाचकेन' इत्यादौ तथाविधान्वयबोधापत्तेरप्युक्तरीत्या वारणसम्भवादिति ।

मैवम्—'राज्ञः पुरुष' इत्यादौ षष्ठ्यादेः स्वत्वादिवाचकत्वमावश्य कम्। अन्यथा 'पुरुषो न राज्ञः' इत्यादौ पुरुषे राजस्वत्वाद्यभावः नावगन्तु मप्रचेः। नहि तत्र स्वत्वादिसम्बन्धावच्छिन्नप्रतियोगिताकराजाद्यभाव एव प्रतीयते न तु राजस्वत्वाद्यभाव इति सम्भवति, स्वत्वादिसम्बन्धस्य वृत्त्य नियामकतया प्रतियोगितानवच्छेदकत्वेन तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभा

बाधप्रसिद्धेः । अत एव स्वामित्वादिकं परित्यज्य स्वत्वादेः षष्ठ्यर्थत्वं नवीना स्वीकुर्वन्ति, स्वामित्वादेः षष्ठ्यर्थत्वे तस्य निरूपकतासम्बन्धेन पुरुषांशे ऽन्वयसम्भवे ऽपि तादृशसम्बन्धस्य वृत्त्यनियामकतया संसर्गाभावप्रतियोगितानवच्छेदकत्वेन तत्सम्बन्धावच्छिन्नाभावस्य नञा प्रत्यायनासम्भवात् । आश्रयतासम्बन्धावच्छिन्नाभावबोधस्यैतादृशसमभिव्याहारस्थले ऽभ्युपगमे चैत्रादिसन्निधाने धने ऽपि आश्रयतासम्बन्धावच्छिन्नप्रतियोगिताकचैत्रवृत्तिस्वामित्वाभावसत्त्वान्नेदं चैत्रस्येति प्रयोगापत्तिः ।

न च नञ्समभिव्याहारस्थलानुरोधेन षष्ठ्यादेः स्वत्वादिवाचकत्वे ऽपि 'राज्ञः पुरुषः' इत्यादौ षष्ठ्यर्थस्य संसर्गमर्यादया भानमुचितम्, तस्य प्रकारत्वोपगमे तत्सम्बन्धस्याधिकस्य भानकल्पनेन गौरवात् । नञ्समभिव्याहारस्यैव तत्प्रकारकबोधनियामकत्वाभ्युपगमेन सामग्रीविरहात् तत्प्रकारकबोधस्य तदसमभिव्याहारस्थले ऽसम्भवादिति वाच्यम्, एवं सति नञ्पदं विना यादृशसमभिव्याहारस्थले यत्र धर्मिणि येन सम्बन्धेन यस्य विशेषणतया भानम्, नञ्समभिव्याहारे तत्र धर्मिणि तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावः प्रतीयते इति सर्वजनानुभवस्याऽपलापापत्तेः । 'राज्ञः पुरुषः' इतिवाक्यजन्याप्रामाण्यज्ञानानास्कन्दितबोधदशायां 'पुरुषो न राज्ञः' इत्यादिवाक्यादपि शाब्दबोधापत्तेः, स्वत्वाभावबुद्धौ स्वत्वसंसर्गकज्ञानस्य विरोधित्वे मानाभावात् । वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वे ऽपि 'राज्ञः पुरुषः' इत्यादौ राजस्वत्वादेः प्रकारताभ्युपगमः समुचितः । अन्यथा तादृशसमभिव्याहारज्ञानघटितशाब्दसामग्रीकाले 'राजस्वत्वाभाववान् पुरुषः सुन्दरः' इत्याकारकविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षवारणाय तत्र तादृशसामग्र्याः प्रतिबन्धकताकल्पनाधिक्येन गौरवात् । अस्मन्मते तादृशसमभिव्याहारघटितसामग्र्याः 'राजस्वत्वाभाववान् पुरुषः' इत्यादिबाधाभावघटिततया तत्सत्त्वे विशेष्यतावच्छेदकादिप्रकारकनिश्चयरूपकारणविरहादेव तथाविधविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षोत्पत्त्यसम्भवेन तादृशसामग्र्यास्तत्र प्रतिबन्धकत्वाकल्पनात् । [illegible] च न सम्भवात् निर्वाहः । अन्यथान्यविधप्रत्यक्षेच्छानामुत्तेजकतया तादृशेच्छायामसत्या

चोपदर्शितविशिष्टवैशिष्ट्यबोध उपकारकेच्छारूतादुपदर्शितविशिष्टवैशिष्ट्यबोधोत्पत्तये अन्याहशविषयताया एव प्रतिबध्यतावच्छेदकत्वोपगमावश्यकत्वात् ।

न च स्वत्वादेः प्रकारतामते ऽपि स्वत्वादिसम्बन्धावच्छिन्नप्रतियोगितावद्राजाद्यभावविशिष्टपुरुषादि वैशिष्ट्यबोधे तथाविधसामग्र्याः प्रतिबन्धकताधिक्येन गौरवम्, संसर्गतामते तादृशसामग्र्याः स्वत्वादिसम्बन्धावच्छिन्नप्रतियोगिताकराजाद्यभाववत्तानिश्चयाभावघटिततया तत्सत्त्वे कारणविरहादेव तथाविधप्रत्यक्षवारणसम्भवादिति वाच्यम् । मन्मते तादृशप्रत्यक्षं प्रति तथाविधसामग्र्याः प्रतिबन्धकताधिक्ये ऽपि निरूपितत्वादिसम्बन्धावच्छिन्नप्रतियोगिताकराजाद्यभावविशिष्टस्वत्वादिवैशिष्ट्यबोधे तथाविधसामग्र्याः प्रतिबन्धकताऽकल्पनेन तदंशे साम्यात् ।

तथाच पूर्वोक्त 'राजस्वत्वाभाववान् पुरुषः सुन्दरः' इत्यादिविशिष्टवैशिष्ट्यप्रत्यक्षं प्रति 'राज्ञः पुरुषः' इत्यादिसामग्र्याः प्रतिबन्धकत्वकल्पनं संसर्गतावादिना मतेऽधिकमिति ।

न च स्वत्वादेः प्रकारतामते घटप्रत्यक्षादिकं प्रति तादृशसामग्रीप्रतिबन्धकतायां निर्विकल्पकत्वादुपस्थितिनिवेशाधिक्येन 'राजस्वत्वाभाववान्पुरुषः' इत्यादिबाधाभावनिवेशाधिक्येन च गौरवम् । असम्मते तादृशोपस्थितितद्विषयाभावादीनां तथाविधवाक्यजन्यशाब्दबोधं प्रत्यहेतुतया तादृशवाक्यघटितसामग्रीप्रतिबन्धकताया तेषामनिवेशादिति वाच्यम् । भवन्मते ऽपि स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यराजस्वत्वाभाववान्पुरुषः इत्यादिनिश्चयस्य तदभावव्याप्यवत्तानिश्चयमुद्रया तादृशवाक्यजन्यशाब्दधीविरोधितया तादृशनिश्चयाभावस्य तथाविधसामग्रीप्रतिबन्धकताया निवेशनस्याधिक्येन लाघवानवकाशात् । मन्मते राजस्वत्वाभाववान् पुरुषः इत्यादिबाधकाभावनिवेशेनैव तादृशनिश्चयकाले प्रत्यक्षाद्युपपत्तेस्तदभावानिवेशात् ।

यत्तु 'राज्ञः पुरुषः' इत्यादौ राजस्वत्ववान् पुरुषः इत्यादन्वयबोधोपगमे राजकीय स्वत्वम्, राजस्वत्ववान्पुरुषः इत्याकारकद्विविधानुमितेरेव तदतिरिक्त

विषयकत्वेन तादृशानुमितिं प्रति पृथेक तादृशवाक्यघटितसामग्र्या प्रति बन्धकत्वद्वयम् । अस्मन्मते च तादृशानुमित्योस्तथाविधवाक्यजन्याद्राजकीयः पुरुष इत्यतादृशबोधादतिरिक्तविषयकतया तत्र तादृशसामग्र्या प्रतिबन्धकत्वकल्पनं नास्ति, तथाविधानुमितितथाविधशाब्दसामग्र्याश्च सत्योरनुमितेरेवोत्पत्ते, अपि तु 'राजकीयः पुरुषः' इत्याकारकस्वत्वसंसर्गकैकविधानुमितिं प्रत्येव तादृशसामग्र्या प्रतिबन्धकत्वमत्र कल्पनीयमिति लाघवमिति—,

तदप्यविचारितरमणीयम् । भवन्मते यत्र यादृशानुमितिः स्वीक्रियते अस्मन्मते ऽपि तत्र तादृशानुमितेः स्वीकरणीयतयानुमितौ शाब्दसामग्र्या प्रतिबन्धकत्वसाम्यात्, उपदर्शितस्थले भवद्भिरनुमितिः स्वीक्रियते अस्माभिरपि स्वीक्रियते, कुत्र प्रतिबन्धकताद्वयकल्पनमिति भवतापि तादृशशाब्दं प्रति तादृशानुमितिद्वयसामग्रीद्वयस्य प्रतिबन्धकताया वाच्यतया साम्याच्च ।

एवम् 'राजपुरुष' इत्यादिसमासवाक्यात्स्वत्वसंसर्गकशाब्दबोधस्वीकारे तादृशशाब्दबोधसामग्र्या स्वत्वसंसर्गेण राजविशिष्टपुरुषतात्पर्यज्ञानाद्यघटिताया भिन्नविषयकप्रत्यक्षादेः प्रति प्रतिबन्धकत्वाधिक्येन गौरवात् तत्र राजसम्बन्धिप्रकारकाभेदान्वयबोधस्वीकार एवौचित्य । न च भवन्मते ऽपि तादृशाभेदान्वयबोधसामग्र्या प्रतिबन्धकताधिक्येन गौरवमिति वाच्यम् । राजपदस्य राजसम्बन्धिनि स्वारसिकलक्षणाग्रहदशायामभेदसम्बन्धेन राजसम्बन्धिविशिष्टपुरुषे तात्पर्यग्रहसत्त्वे भवन्मते ऽपि कर्मधारयत्वेनाभिमततथाविधसमासजन्यतादृशशाब्दबोधस्वीकारस्यावश्यकतया तादृशसामग्रीप्रतिबन्धकताया उभयमतसिद्धत्वात् ।

यत्तु 'दर्गो यस्य' इत्यादौ लुप्तद्वितीयाविभक्तिस्मरणेन दधिकर्मकदर्शनबोधवद्राजपुरुष इत्यादावपि लुप्तषष्ठीविभक्तिस्मरणेन राजसम्बन्धप्रकारकभेदान्वयबोधनिर्वाहे राजसम्बन्धिनि निरूढलक्षणा स्वीकृत्याभेदान्वयबोधोपगमो निरर्थक । न च षष्ठीतत्पुरुषादिस्थले ऽपि लुप्तविभक्तिस्मरणएव भेदान्वयबोधस्तदा "ऋद्धस्य राजमातङ्गा" इत्यादिप्रयोगापत्तिः, तत्र मातङ्गादौ राजादीनामन्वयबोधोपपत्तये राजादिपदे स्वपष्ठ्यादिविभक्त्यनुसन्धानस्यावश्य

कत्वेन समानविभक्तिकतया राजादौ ऋद्धादिपदार्थस्याभेदान्वयबोधसम्भवा-
दिति वाच्यम्, यतस्तत्र ऋद्धराजादीनामभेदान्वयबोधानुपपत्त्या नाभि-
युक्तानामप्रयोगः, अपि तु समासघटकपदसापेक्षतया राजपदस्यासामर्थ्याति
देशात्समासासाधुत्वेन । तत्सापेक्षत्वं च तदर्थान्वितस्वार्थपरत्वम्, स्वार्थश्च
स्वीयवृत्तिपदविशेष्यः । अत एव, "शरैः शातितपत्रः" "चैत्रस्य दास
भार्या" इत्यादौ न समस्यमानशातितदासपदादेः सापेक्षता । तदर्थैकदेश-
शातनदासत्वादावेव शरकरणकत्वचैत्रनिरूपितत्वादीनामन्वयात् । तदर्थान्वि
तत्वञ्चाभेदान्वयो वा निवेशनीय इति—,

तदसत्; स्वारसिकलक्षणाग्रहस्थलानुरोधेन तादृशसमभिव्याहारज्ञाना
देस्तथाविधबोधजनकतायाः कल्पनीयत्वेन निरूढलक्षणास्वीकारे गौरवाभावात्।
यत्र राजपदस्य राजसम्बन्धिनि स्वारसिकलक्षणाग्रहस्तत्र तादृशबोधस्यो
भयमतसिद्धतया तादृशसमभिव्याहारज्ञानस्य राजसम्बन्ध्यभिन्नपुरुषबोधे कारण-
तायाः क्लृप्तत्वात्, तयैव निर्वाहेण सर्वत्र लुप्तविभक्तिस्मरणकल्पने माना
भावात् ।

न च स्वारसिकलक्षणाग्रहस्थले तत्र तादृशान्वयबोधस्योभयमतादि
सिद्धत्वे ऽपि निरूढलक्षणामते सम्बन्धितात्पर्यस्यानादित्वकल्पना गौरवम्,
अनादितात्पर्यविषयीभूतार्थनिरूढलक्षणाया एव निरूढलक्षणात्वादिति वाच्यम्;
राजपुरुष इत्यादिवाक्यजन्यशाब्दबोधात्पूर्वं नियमतो लुप्तविभक्तिस्मरणकल्पना
पेक्षया तात्पर्यस्यानादित्वकल्पनाया गौरवाविरहादिति ।

न चैवं 'दधि पश्यति' इत्यादावपि दध्यादिपदस्य दधिकर्मकादौ
लक्षणां स्वीकृत्य तात्पर्येण सह तस्याभेदान्वयबोधोपपादनसम्भवात् तत्रापि
लुप्तविभक्तिस्मरणकल्पनमनुचितमिति वाच्यम्, दध्यादिपदस्य दधिकर्मकादौ
लक्षणाग्रहदशायामपि तस्य द्वितीयान्तत्वविरहे तत्त्वभ्रमदशायां दधिकर्मक
पश्यति, दधिकर्मकेण पश्यतीत्यादावपि उत्तमोत्थे ऽपि दधिकर्मकपदार्था
न्वयबोधानुदयात् । मन्मते दधिकर्मक पश्यतीत्यत्र दधि पश्यतीति स्थले
यद्दधिपदोत्तरस्मर्यमाणविभक्त्याकाङ्क्षाज्ञानादि तत्सामग्रीसत्त्वात् दधिकर्मकदर्शं

नान्वयस्यापत्तेर्द्वितीयान्तदध्यादिपदत्वावच्छिन्नधर्मिकतादृशधात्वादिसमभिव्याहार
ज्ञानस्य तादृशान्वयबोधे हेतुताया आवश्यकत्वात्, 'दधि पश्यती'त्यादौ
लुप्तद्वितीयानुसन्धानस्यावश्यकत्वात्। राजसम्बन्धिपुरुषाद्यन्वयबोधे च राजादिपदा
5 व्यवहितोत्तरपुरुषादिपदत्वप्रकारकज्ञानस्य हेतुताया, स्वारसिकलक्षणाग्रहस्थले
तुराधेनावश्यकल्पनीयतया 'राजपुरुष' इत्यादौ राजादिपदस्य तृतीया
द्यन्तत्वभ्रमदशायां राजसम्बन्धिपुरुषाद्यन्वयबोधापत्त्यसम्भवात्, तृतीयादि
विभक्त्या व्यवधानात्। 'दधि पश्यती'त्यादौ दधिपदाव्यवहितोत्तरत्व-
प्रकारकधातुपदज्ञानस्य हेतुताया अक्लृप्तत्वात्। 'पश्यति दधि' 'पश्यति
चैत्रो दधि' इत्यादावपि दधिकर्मकदर्शनान्वयबोधात् तादृशज्ञानहेतुताया
अनावश्यकल्पनत्वाच्चेति।

'तण्डुलं पचती'त्यादौ तण्डुलादिपदस्यैव तण्डुलादिकर्मके लक्षणा,
विभक्तिस्तु साधुत्वार्था। एवं 'राजपुरुष' इत्यादावपि राजादिपदस्य
सम्बन्धादौ लक्षणा, विभक्तिः साधुत्वार्था। तत्तद्विभक्त्यन्तसमभिव्याहारस्य
तत्तल्लाक्षणिकार्थबोधनियामकत्वान्नातिप्रसङ्गः। विभक्तेरेव प्रकृत्यर्थविशेषित
स्वार्थे लक्षणेति तु न सम्भवति, विभक्तेः कुत्रापि शक्तेरक्लृप्ततया तत्र
शक्यसम्बन्धरूपलक्षणाया असम्भवात्। 'तण्डुलः प्रमेय' इत्यादौ
विभक्त्यर्थासम्मिलितस्यैव प्रकृत्यर्थस्य भानात्, प्रकृतिशक्तेः स्वार्थे क्लृप्ततया
तत्र लक्षणासम्भवादिति तु चिन्तनीयम्। राजादिपदस्य राजसम्बन्धादौ
शक्तत्वभ्रमदशायामिव तदर्थलक्षणाग्रहदशायामपि 'राजसम्बन्धि सम्बन्धी पुरुष'
इत्यादाविव राजसम्बन्धिसम्बन्धीपुरुष इत्याद्यन्वयबोधस्य सर्वजनानामनुभव
सिद्धत्वात्। 'पचति चैत्र' इत्यादावपि कृतिसम्बन्धेन पाकादेश्चैत्रादौ
विशेषणत्वोपगमे 'चैत्रो न पचती'त्यादावन्वयबोधानुपपत्तिर्द्रष्टव्या।
कृतिसम्बन्धस्यापि वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्या-
प्रसिद्ध्या तद्बोधनासम्भवात्।

अथैवमपि 'चैत्रो जानाती'त्यादौ चैत्रादौ ज्ञानादेराश्रयता-
सम्बन्धेनान्वयबोधोपगमे क्षतिविरहः, आश्रयतासम्बन्धस्याभावप्रतियोगिता-
वच्छेदकतया 'न जानाति चैत्र' इत्यादावाश्रयतासम्बन्धावच्छिन्नप्रति-

योगिताकज्ञानाभावस्यैव भानसम्भवात् । तथा च तत्राख्यातस्याश्रयत्वार्थकत्वं निर्युक्तिकम् । न च धात्वर्थज्ञानादेराश्रयतासम्बन्धेन चैत्रादिरूपप्रातिपदिकार्थे साक्षात्प्रकारत्वोपगमे 'ज्ञानं चैत्र' इत्यादावपि तथान्वयबोधापत्तिरिति वाच्यम्; तादृशान्वयबोधे आख्यातान्तधातुसमभिव्याहारज्ञानस्य हेतुत्वात् । भवतोऽप्याश्रयताप्रकारकबोधे तादृशसमभिव्याहारज्ञानस्य हेतुताया आवश्यकत्वात् ।

यत्तु—"पचति चैत्र" इत्यादौ पाककृतिमांश्चैत्र इत्याकारकाख्यातार्थप्रकारकशाब्दबोधोत्पत्तये तत्राख्यातजन्यकृत्युपस्थितेर्हेतुत्वकल्पनमावश्यकम्, तथा च तत्तदर्थनिरूपितविशेष्यतात्मनिष्ठप्रत्यासत्त्या पदार्थोपस्थितिहेतुत्वकल्पने शक्यलक्ष्यसाधारणार्थभेदेनाख्यातजन्योपस्थितेः कारणताबाहुल्यमित्यर्थविशेषानिवेश्य धात्वर्थप्रकारकान्वयबोधं प्रति प्रत्ययजन्योपस्थितेः समानविशेष्यताप्रत्यासत्त्यैव हेतुत्वमुपेयते, तथा च तादृशकारणबाधेन चैत्रादर्धात्वर्थज्ञानविशेष्यतया "चैत्रो जानाति" इत्यादौ भानं न सम्भवति। यदि च धातुत्वप्रत्ययत्वादीनामननुगततया दुर्निर्वचनतया नैतादृशानुगतकार्यकारणभावकल्पनं सम्भवतीति मन्यते ? तदापि यत्र ज्ञाधातोरेव पाकादौ लक्षणा तत्र जानातीत्यादिवाक्यतात्पर्यकृ यादि प्रकारकान्वयबोधोत्पत्त्या ज्ञाधात्वर्थप्रकारकान्वयबोधे तदव्यवहितोत्तरतिङादिप्रकारकज्ञानजन्योपस्थितेः समानविशेष्यत्वप्रत्यासत्त्या हेतुतायास्तत्र कल्पनीयतया तादृशकारणबाधाच्चैत्रो जानातीत्यादौ चैत्रादेर्ज्ञानविशेष्यतया भानानुपपत्तिर्दुर्वारैवेति,

तदप्यसत्—प्रत्ययान्तरार्थविशेष्यकशाब्दबोधे व्यभिचारवारणाय तादृशोपस्थितिवैशिष्ट्यस्य तद्धर्मोपस्थितिजन्यतावच्छेदककोटौ अवश्यं निवेशनीयतया तदनुत्तरशाब्दबोधे चैत्रादेर्ज्ञानादिविशेष्यतया भाने तादृशकारणबोधस्याऽकिञ्चित्करत्वात् । तादृशानुपूर्वीघटकज्ञादिधातुजन्यज्ञानाद्युपस्थितिचैत्रादिरूपविशेष्योपस्थितिवैशिष्ट्यानाद्यघटितसामग्र्या आश्रयतासंसर्गकशाब्दबोधजनने बाधकाभावात् ।

न चैतन्मते आश्रयतासम्बन्धेन ज्ञानादिप्रकारकशाब्दबोधे तादृशोपस्थितिहेतुत्वान्तरकल्पनाधिक्यम्, आश्रयतासम्बन्धेन ज्ञानविशिष्टचैत्राद-

तात्पर्यकात्सर्वनाम्नः साङ्केतिकशब्दान्तराद्वा तादृशसम्बन्धेन ज्ञानादिप्रकारक-चैत्रादिविशेष्यकशाब्दबोधस्य सर्वमत एव प्रसिद्धावपि तादृशशाब्दबोधे पदार्थान्तरभाननैयत्येन तन्मिश्रितयोग्यताज्ञानस्य तत्र हेतुताया आवश्यकत्वात् । ज्ञानादिविशिष्टचैत्रादिमात्रविषयकयोग्यताज्ञानस्य ज्ञानादिविशिष्टचैत्रादिविषयकशाब्दबोधे हेतुताया कुत्राप्यक्लृप्तत्वादिति वाच्यम्, भवन्मतेऽपि ज्ञानाश्रयताप्रकारकचैत्रादिविशेष्यकशाब्दबोधे तथाविधयोग्यताज्ञानहेतुताया आधिक्यात् । आश्रयतासंसर्गकज्ञानीयकारणतावच्छेदकस्य तदीयसंसर्गविषयताघटिततत्प्रकारकज्ञानत्वरूपकारणतावच्छेदकापेक्षया लघुशरीरतया आश्रयताया संसर्गतामतस्यैव लघुत्वात् ।

न च यत्राश्रयत्वे ज्ञाधातुसमभिव्याहृताख्यातस्य शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र ज्ञानाश्रयताप्रकारकशाब्दबोधस्योभयमतसिद्धतया तत्र तादृशयोग्यताज्ञानहेतुत्वमुभयमतसिद्धमेवेति वाच्यम्, आश्रयतायाः संसर्गतावादिना तत्राप्याश्रयताप्रकारकबोधस्यानभ्युपगन्तव्यत्वादिति चेत्,

सत्यम् = एतदभिप्रायेणैव 'जानाती' त्यादावाख्यातस्य निरर्थकता मणिकार ऊरीचकार । तत्राश्रयत्वे निरूढलक्षणामभ्युपगच्छता दीधितिकारेण पुनरेवं आचष्ट = यत्र ज्ञाधातोर्ज्ञानाश्रयत्वे शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र चैत्राद्यंशे धात्वर्थैकदेशस्य ज्ञानादेरन्वयानुपपत्त्या स्वरूपसम्बन्धेन ज्ञानाश्रयताप्रकारकचैत्रादिविशेष्यकान्वयबोध एव तत्र मणिकृता स्वीकरणीयः । तथा च तत्र ज्ञानाश्रयताप्रकारकशाब्दबोधे तत्प्रकारकयोग्यताज्ञानहेतुताया क्लृप्तत्वादाश्रयतासंसर्गकशाब्दबोधे तादृशयोग्यताज्ञानहेतुताकल्पनमधिकमेव मणिकृन्मते ।

न च दीधितिकृन्मते तादृशयोग्यताज्ञानहेतुताकल्पनलाघवेऽपि 'जानाती' त्याद्यानुपूर्वीज्ञानघटित ज्ञाधातुशक्तिज्ञानजन्यज्ञानोपस्थितिघटितशाब्दसामग्र्या भिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धकताया आख्यातजन्याश्रयत्वोपस्थिते निवेशनस्याधिक्याद्गौरवमिति वाच्यम्, भवन्मतेऽपि 'ज्ञानाश्रयत्वाभाववान् । सुन्दर' इत्यादिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे 'जानाति

चैत्र ' इत्याद्यानुपूर्वीज्ञानघटितशाब्दजन्यज्ञानोपस्थितिघटितसामग्र्याः प्रति-
बन्धकताधिक्येन गौरवात् । मन्मते च तादृशसामग्र्या विरोधिज्ञानाश्र-
यत्वाभाववत्तानिश्चयघटिततया "तथाविधविशिष्टवैशिष्ट्यबोधसामग्र्या. तादृश-
शाब्दसामग्र्या मम युगपदवस्थानासम्भवेन तादृशप्रतिबन्धकत्वकल्पनाविरहा-
दित्यधिकं दर्शितदिशाऽवसेयम् ।

अत एव रीत्या ' भूतले न घट ' इत्यादौ घटादिपदस्य घटप्रति-
योगिकादौ तदुत्तरसुब्विभक्तेरेव वा प्रतियोगितायां लक्षणामभ्युपेत्य तत्र
'घटप्रतियोगिकाभावो भूतलवृत्ति' रित्याद्याकारकप्रतियोगिताप्रकारकशाब्दबोधो-
पगम एव समुचित. ; तथा सति तथाविधसमभिव्याहारज्ञानघटितसाम-
ग्र्याः ' घटप्रतियोगिकत्वाभाववानभाव. प्रमेय ' इत्यादिविशिष्टवैशिष्ट्यबोध
प्रति प्रतिबन्धकत्वाकल्पनेन लाघवात् इत्युक्तनियमे निपातातिरिक्तत्वविशेषण-
वैयर्थ्यमिति चेन्न, ' भूतले न घट ' इत्यादौ घटाद्यभावे भूतलान्वितसप्त-
म्यर्थाधेयत्वस्यैव तात्पर्यवशाद्घटादौ सप्तम्यन्तार्थभूतलादिवृत्तित्वाभावस्यान्व-
यबोधेऽप्यनुभवसिद्धः , अन्यथा तादृशवाक्यजन्यस्याप्रामाण्यज्ञानानास्कन्दि-
तबोधस्य ' भूतले घट ' इत्यादिवाक्यजन्यघटादिविशेष्यकभूतलाद्याधेयत्व-
प्रकारकबोधविरोधितायाः सर्वानुभवसिद्धाया अनुपपत्तेः । नञ्पदं विना यत्र
धर्मिणि यस्य विशेषणतया भानं यादृशसमभिव्याहाराद्भवति तादृशसमभि-
व्याहारस्थले नञ्पदे तत्र धर्मिणि तदभाव. प्रतीयत इत्यनुभवापलापप्रस-
ङ्गाच्च । एवं च नञर्थाभावे ऽनुयोगितया घटाद्यन्वयबोधोपपत्तये
*निपातातिरिक्तत्वविशेषणमावश्यकम् ।*

एवम् ' न पचति चैत्र ' ' चैत्रस्य न धन ' मित्यादौ पाकवृत्तिचै-
त्रस्वत्वाद्यभावस्य नञर्थस्य चैत्रधनादावन्वयबोधोपपत्तये ' घटो न पट '
इत्यादौ नञर्थपटादिभेदस्यान्वयबोधोपपत्तये च तदावश्यकम् । न चोक्त-
स्थलेऽनुयोगिता ऽभावसंसर्गकतया ऽभाववता सममनुयोगिनो भेदान्वयबोध
एव स्वीक्रियत इति वाच्यम्, तथा सति सर्वत्राभाववत एव नञर्थतया
मुख्यार्थभावनञो दुर्लभतापत्ते ।

अभावस्य भेदान्वयोपगमे ऽपि कार्यकारणभावकल्पनाधिक्यमिति

द्वेणाभाववति लक्षणानौचित्यात्, अभाववतोऽभेदान्वयबोधोपगमे 'भूतले घट' इत्यादिवाक्यजन्यबोधे 'भूतले न घट' इत्यादिवाक्यजन्यबोधस्याऽविरोधितापत्तेश्च, लाघवात् स्वरूपसम्बन्धेन ग्राह्याभावनिश्चयस्यैव विशिष्टबुद्धिविरोधित्वात् न त्वभेदसंसर्गकग्राह्याभावाश्रयप्रकारकनिश्चयस्येति ।

'नीलो घट' इत्यादौ विशेषणविभक्तेरभेदार्थकत्वमते ऽपि यथायुक्त रीत्या लाघवं सम्भवति तथापि तत्रापि न नो विद्वेष इति दिक् ।

प्रत्ययाश्च विभक्तिकृत्तद्धितादिभेदेन नानाविधाः । विभक्तिश्च सुप्तिङ्भेदेन द्विविधा । सुब्विभक्तयः प्रथमाद्वितीयादयः सप्त । तत्र प्रथमार्थं प्रकृत्यर्थे विशेषणविधयाऽन्वयिनी सङ्ख्यैव । अत एव यत्र विशेष्यवाचकसमानविभक्तिकपदं निपातपदं वा नास्ति तत्र प्रथमान्तार्थस्य विशेष्यभागस्य सामन्याभावादसौ मुख्यविशेष्यतयैव भासते । सङ्ख्यावाचकता च एकवचनद्विवचनबहुवचनानामेकत्वत्वद्वित्वत्वबहुत्वत्वावच्छिन्नेषु शक्तिः । वाचकता च सुऔजसत्वादिना न तु स्वादितिबादिसाधारणैकवचनत्वादिना । एकवचनत्वादेर्दुर्वचत्वात् । न चैकत्वादिवाचकत्वं तत्, वाचकतायाः शक्तितारूपत्वे आत्माश्रयप्रसङ्गात् । बोधकतारूपत्वे शक्तिभ्रमेण द्विवचनादीनामपि एकत्वबोधकतया अतिप्रसक्तत्वात् । न चैकवचनत्वादिकं जातिविशेषः, सुत्वादिना साङ्कर्यात् । न च शक्तिसम्बन्धेन एकवचनादिपदवत्त्वं तत्, तादृशज्ञानदशायां च सुत्वादिना शक्तिभ्रमादेव शाब्दबोधः, एकवचनादिशब्दस्य पदद्वयात्मकतया तादृशसमुदायशक्तेरेवाप्रसिद्धिरिति तु नाशङ्कनीयम्— 'एकं नदी' इत्यादिव्युत्पत्त्या एकवचनादिशब्दस्य स्वादिबोधकत्वे एकादिशब्देऽपि तादृशव्यवहारापत्तेः; एकवचनादिशब्दस्य स्वादौ रूढिस्वीकारस्यावश्यकत्वादिति वाच्यम्, ग्रन्थकारीयसङ्केतेनैवोपपत्तौ एकवचनादिपदे शक्तेरप्रामाणिकत्वात् । "तान्येकवचनद्विवचने" इत्यादिपाणिनिसूत्रस्य तदीयसङ्केतग्रहपरतयाप्युपपत्तेः । न हि "यू स्त्र्याख्यौ नदी" इत्यनुशासनात् स्त्र्याख्येदूदन्तादिशब्दे नद्यादिपदस्य शक्तिः सिद्ध्यति, किन्तु तदीयसङ्केत एव । अत एव नद्यादिसंज्ञा आधुनिकसङ्केतशालित्वात्पारिभाषिक्येव न त्वौपाधिकी ।

अथैवमपि पाणिनिसङ्केतसम्बन्धेन तादृशपदवत्त्वमेव एकत्वादिशक्ति-तावच्छेदकमस्त्विति चेन्न, तादृशसङ्केतस्य केन रूपेण सम्बन्धता ? सङ्केतत्वेनेति चेत्, तर्हि कस्य चित्पुंस एकवचनपदात् स्वौजसादिर्बोद्धव्य इत्याकारकसङ्केतस्यापि सम्भवादातिप्रसक्तिर्दुर्वारैव । पाणिनिसङ्केतत्वेन तथेति चेत्तर्हि व्याकरणप्रणेतुः पुरुषान्तरस्यापि तादृशसङ्केतस्य सम्भवात्, तदीयसङ्केतसम्बन्धेन तत्पदवत्त्वस्य डित्थादिपदात् स्वौजसादिर्बोद्धव्य इत्याकारकपुरुषसङ्केतसम्बन्धेन डित्थादिपदवत्त्वस्य वा विनिगमनाविरहेण शक्ततावच्छेदकताप्रसङ्ग, तथाचागत्या आनुपूर्वीविशेष एव शक्ततावच्छेदक इति ।

वस्तु-सङ्ख्यापि प्रकृतेरर्थं, एकवचनादिकं च एकत्वाद्यर्थे तात्पर्य-ग्राहकमेव, न चैवमेकप्रकृत्युपस्थाप्ययोरर्थयोः परस्परमन्वये आकाङ्क्षाविरहाद् घटादावेकत्वाद्यन्वयानुपपत्तिः, अन्यथा हर्यादिपदादुपस्थितयोरश्वसूर्ययो-राधाराधेयभावेनान्वयापत्तिः । घटादिपदस्य एकत्वादिविशिष्टघटादौ च न शक्तिसम्भवः । 'घटस्य पश्ये' त्यादौ सङ्ख्यानवच्छिन्नघटादेरेवा-न्वयबोधादिति वाच्यम्, आकाङ्क्षाभावेनिम्बादिकप्रकृत्युपस्थाप्ययोरपि घटैक-त्वयोः परस्परमन्वयसम्भवात् । अतएव खण्डशक्त्यैकप्रकृत्युपस्थाप्ययोर-न्ययोगव्यवच्छेदान्नो परस्परमन्वयबोध । न चैवं कर्मत्वादिकमपि प्रकृत्यर्थं एवास्तु, किं तत्र द्वितीयादिशक्त्येति वाच्यम्, नामार्थधात्वर्थया-स्साक्षाद्भेदान्वयबोधस्याव्युत्पन्नतया कर्मत्वादेर्नामार्थत्वे तेन समं धात्वर्था-न्वयासम्भवात् । न च सङ्ख्याया प्रातिपदिकार्थत्वे सति तात्पर्यज्ञाने विनैव शक्तिभ्रम लक्षणाग्रहं च द्विवचनाद्यन्तपदादेकत्वादिबोधसम्भवात् एकत्वादितात्पर्येण एकवचनान्तस्येव द्विवचनान्तस्यापि पदस्य स्वारसिक प्रयोगापत्तिरिति वाच्यम्, अनादितात्पर्यस्यैव स्वारसिकप्रयोगमूलत्वादेक-वचनान्तपदस्यैव एकत्वादावनादितात्पर्यविषयत्वेनातिप्रसङ्गविरहात् । "द्व्येक-योर्द्विवचनैकवचने" इत्याद्यनुशासनं च तादृशतात्पर्यग्राहकमेवेति वैया-करणमतम्—

तदसत् = अत्र ना प्रकृत्यानुपूर्व्याः शक्ततावच्छेदकत्वापेक्षया

अल्पतरविभक्त्याद्यानुपूर्वीणामेकत्वादिशक्तताच्छेदकत्वस्यैवोचितत्वात् । न च प्रातिपदिकत्वमेव शक्ततावच्छेदकम् न तु घटपदत्वादिकमिति न शक्त्यानन्त्यमिति वाच्यम्; प्रातिपदिकत्वस्य दुर्निर्वचत्वात् । तदज्ञाने ऽपि एकत्वादिज्ञानस्यानुभविकत्वात् । पदत्वेन वर्णत्वेन वा शक्तत्वे विभक्तेरपि तद्वाचकतासिद्धेः । एकत्वादिशाब्दबोधात्पूर्वं वर्णत्वाद्युपस्थितेरप्यनावश्यकत्वाच्च । फलानुरोधेन तत्कल्पने च कल्पनागौरवात् । एवमानुपूर्वीभिन्नधर्मस्य वाचकतावच्छेदकत्वे घटपद सुपद च न सङ्ख्यावाचकमिति विपरीतनिश्चयकाले ऽपि शब्दधर्मावच्छिन्नस्य वाचकताग्रहसम्भवात् घटइत्यादौ सङ्ख्याया बोधापत्तिः ।

अथ विभक्तीनां सङ्ख्यार्थकतासाधकतामते प्रकृतिविभक्त्योरेकवाक्यताविरहनिश्चयदशायां विभक्त्युपस्थाप्यैकत्वादेः प्रकृत्यर्थे अन्वयबोधवारणाय तयोः समभिव्याहारज्ञानस्य घटादिविशेष्यकैकत्वान्वयबोधं प्रति कारणत्वमधिकं कल्पनीयम् । एकपदोपस्थापितयोः घटैकत्वयोरन्वयबोधोपगमे च न समभिव्याहारज्ञानस्य तत्र हेतुता कल्प्यत इति लाघवात्, प्रकृत्याद्यानुपूर्व्याः सङ्ख्यावाचकतावच्छेदकत्वमुपेयत इति चेन्न, आकाङ्क्षाविचारे समभिव्याहाराकाङ्क्षाज्ञानस्य हेतुतया निराकृतत्वात् ।

अथैवमपि विभक्तेः सङ्ख्यार्थकत्वे विनिगमनाविरहेण प्रकृतिधर्मिकस्य विभक्तिधर्मिकस्य च सङ्ख्याप्रकारकान्वयबोधपरत्वज्ञानस्य हेतुता कल्पनीया । विभक्त्यर्थकत्वमते तु विभक्तितात्पर्यविरहेण प्रकृतिधर्मिकमेव तात्पर्यज्ञानं शाब्दधीहेतुरिति लाघवमिति चेन्न; विभक्तेः सङ्ख्यावाचकताविरहे ऽपि प्रकृतिविभक्त्योरानुपूर्वीज्ञानस्य शाब्दान्वयबोधहेतुतया निर्विभक्तिकघटादिपदज्ञानादन्वयबोधवारणायावश्यकल्पनीयतया सङ्ख्यावाचकप्रकृतेरिव तदवाचकविभक्तेरपि सङ्ख्यान्वयबोधकतत्प्रकारकेच्छाविषयत्वरूपतादृशबोधपरत्वसम्भवेन विभक्तिधर्मिकतज्ज्ञानहेतुताया विनिगमनाविरहेणावश्यकत्वात् ।

अथ स्वादीनां सङ्ख्यावाचकत्वकल्पनापेक्षया प्रकृतेस्तत्र लक्षणैवोचिता, शक्यलक्ष्ययोः परस्परमन्वयोपगमे क्षतिविरहात्, प्रथमाविभक्तेः कुलादि

शक्तेरक्लृप्ततया तस्याः शक्यसम्बन्धरूपा लक्षणा न सम्भवति । द्वितीयादेः कर्मत्वादौ शक्तत्वेपि तादृशविभक्तेस्तत्समभिव्याहृतप्रकृतेर्वा सङ्ख्यायां लक्षणा इत्यत्र विनिगमकं दुर्लभम् । न चैकत्वाद्यन्वयबोधे घटपदादि-ज्ञानजन्योपस्थितित्वेनानन्तहेतुताकल्पनमपेक्ष्य स्वादिपदज्ञानजन्यतदुपस्थितित्वेन कतिपयहेतुताकल्पनायां लाघवात्कतिपयशक्तिकल्पने गौरवमकिञ्चित्करम् । सामान्यतः पदवृत्तिज्ञानजन्यतदुपस्थितित्वेनैककारणताकल्पनन्तु न सम्यक्, निर्विभक्तिककुम्भपदादितः सङ्ख्योपस्थितौ तदगृहीतवृत्तिकघटादिपदे तत्तद्विभक्त्यन्तत्वज्ञानवतः पुंसो घटादौ सङ्ख्यान्वयबोधप्रसङ्गात् । घटपटादिज्ञानजन्यैकत्वाद्युपस्थितित्वेनैकत्वादिविषयकशाब्दबोधहेतुतां कल्पयित्वा विभक्तिघटादिपदानुपूर्वीज्ञानतादृशोपस्थित्योः परस्परसहकारेण फलजनकताया अवश्याभ्युपेयत्वादिति वाच्यम्, घटादिपदस्यैकत्वादौ लक्षणाग्रहसत्त्वे 'घट प्रमेय' इत्यादिवाक्यादेकत्व प्रमेयमित्यन्वयबोधस्य सर्वसम्मततया तदनुरोधेनैकत्वादिविषयकशाब्दबोधे घटादिपदजन्यैकत्वाद्युपस्थितित्वेन हेतुतायाः सर्वसम्मतत्वात् ;

नैवम्,—यादृशयादृशपदानां लक्षणया एकत्वादिशाब्दधीजनकत्व नोभयवादिसिद्धम्, तादृशतादृशपदज्ञानजन्यैकत्वाद्युपस्थितीनां तच्छाब्दहेतुत्वकल्पने प्रकृते सङ्ख्यावाचकतावादिनामधिकमिति तत्कल्पनापेक्षया चाऽल्पतरस्वादिपदजन्यैकत्वाद्युपस्थितिहेतुताकल्पन एव लाघवम् ।

एतेन सङ्ख्याविशेषावच्छिन्नघटादिर्लक्षणया प्रकृतेरर्थः न तु सङ्ख्या विभक्त्यर्थः, शाब्दबोधे विभक्तिजन्यसङ्ख्योपस्थितिहेतुताकल्पनाधिक्येन गौर-वात् । घटादिपदस्यैकत्वादिविशिष्टघटादौ लक्षणाग्रहदशायां सर्वमत एव तज्जन्यविशिष्टविषयकोपस्थित्या विशिष्टविषयकशाब्दधीजननात्तथाविधोपस्थितेः हेतुतायाः सर्वानुमतत्वात् । पदान्तरासमभिव्याहृतात् घट इत्यादिपदादेक-त्वादिविशिष्टघटादिशाब्दबोधस्वीकार एव—तद्विषयकस्मरणस्य तत्रापगमात् । तथाचोक्तम्, "सर्वं हि वाक्यं क्रियायां परिसमाप्यते"—इत्यपि निरस्तम् । यादृशयादृशानां लक्षणया एकत्वादिविशिष्टस्वार्थबोधहेतुत्वं नोभयवादिसिद्ध

तादृशानां तत्पदजन्यविशिष्टोपस्थितीनां शाब्दधीहेतुताकल्पनमपेक्ष्य विभक्तिजन्य-सङ्ख्योपस्थितीनामल्पानां तत्कल्पने लाघवात् ।

इदं पुनरिहावधेयम्—विभक्तेः सङ्ख्याबोधकत्वे समानविषयकानुमित्यादिकं प्रति शाब्दसामग्रीप्रतिबन्धकतायां या प्रातिपदिकजन्या घटाद्युपस्थितयो च विभक्तिजन्या सङ्ख्योपस्थितिः प्रवेश्या, तयोश्च मिथो विशेष्यविशेषणभावे विनिगमनाविरहात्प्रतिबन्धकताबाहुल्यम् । प्रकृतेर्विशिष्टलाक्षणिकत्वे तु तदुभयस्थानीयाविशिष्टविषयकोपस्थितिरेकैव सामग्र्यामन्तर्भवति इति लाघवम् । न च विशिष्टविषयकोपस्थितेरपि एकत्वादिप्रकारतानिरूपितघटादिविशेष्यताशालित्वेन घटादिविशेष्यतानिरूपितैकत्वादिविषयताशालित्वेन वा प्रवेश इति विनिगमनाविरहात्साम्यमिति वाच्यम् , त्वन्मते योग्यताज्ञानघटोपस्थित्येकत्वोपस्थितीनां तिसृणां विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबन्धकताषट्कम् , मन्मते तत्र योग्यताज्ञाने विशिष्टविषयकोपस्थितेः प्रत्येकं दर्शितोभयरूपेण वैशिष्ट्यं निवेश्य तदुभयम् । प्रत्येकं तदुभयरूपद्वयावच्छिन्नायामुपस्थितौ योग्यताज्ञानस्य वैशिष्ट्यनिवेशे च द्वयमिति तच्चतुष्टयमात्रमिति रीत्या अस्माकमल्पतरतत्कल्पने महालाघवम् ।

तादृशरीत्यैव च 'प्रणमति' इत्यादौ प्रकर्षविशिष्टनतिधातूनामेवार्थ, प्रादयो द्योतका एव, न तु प्रकर्षादिवाचका इति सर्वानुमतः पन्था परिष्कर्तुं शक्यते । अन्यथा अनन्तधातुजन्यप्रकर्षादिविशिष्टतत्तदर्थोपस्थितीनां शाब्दधीजनकतामपेक्ष्य, कतिपयोपसर्गाधीनप्रकर्षाद्युपस्थितीनां तज्जनकताकल्पने लाघवात् स्वादीनामिव प्रादीनामपि वाचकता निराबाधा सिद्ध्येदिति ।

सङ्ख्यायाश्च प्रत्ययार्थे पर्याप्तिसम्बन्धेनैव विशेषणत्वम् , न तु समवायादिना । तथा सति एकव्यक्तिबोधकपदादाकाशशब्दादपि द्विवचनबहुवचनापत्तेः तत्तदर्थयोर्द्वित्वबहुत्वयोः समवायादिना आकाशाद्यन्वययोग्यत्वात् ।

न च पर्याप्तेः संसर्गत्वे ऽपि तद्दोषतादवस्थ्यम्; घटाकाशादौ द्वित्वादे: पर्याप्तिसत्त्वे प्रत्येकमाकाशादौ तत्पर्याप्तिर्नास्तीति वक्तुमशक्यत्वात्, प्रत्येकस्योभयानतिरिक्तत्वादिति वाच्यम्, उद्देश्यतावच्छेदकव्याप्यत्वविशिष्ट-पर्याप्तेरेव संसर्गतोपगमात्, आकाशत्वादिव्याप्यतया द्वित्वादिपर्याप्तावसत्त्वे नातिप्रसङ्गविरहात् । वैशिष्ट्यं च वैज्ञानिकं न [illegible] वास्तवम्; तेन यत्र योग्यताभ्रमजन्य 'अत्राकाशा' वित्यादिवाक्यजन्यद्वित्वादिप्रकारकाकाशादि-शाब्दबोधस्तत्र विशिष्टसंसर्गाप्रसिद्धावपि न क्षति । द्वित्वादिपर्याप्तावन्यत्र प्रसिद्धस्याकाशत्वादिव्याप्यत्वस्य भ्रान्तेस्तत्रोपगमात् । प्रकारताया भ्रमस्य सर्वानुभवसिद्धत्वेपि सम्बन्धतावच्छेदकांशे भ्रमत्वस्यान्यत्रोपपादितत्वात् । न च प्रकृत्यर्थतावच्छेदक एव व्यापकतासम्बन्धेन द्वित्वान्वयधी. किं नोपे यत इति वाच्यम्, घटावित्यादौ घटत्वादीनां स्वरूपत एवोपस्थिततया तत्रोक्तान्वयबोधस्यासम्भवात् । स्वव्यापकीभूतोद्देश्यतावच्छेदकत्वस्वरूपपरम्पराया एव प्रकृत्यर्थे द्वित्वादेः सम्बन्धतास्वीकारे च व्यापकतारूपसम्बन्धतावच्छेद-कांशे भ्रमत्वस्यावश्यकतया उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेः सम्बन्धतो-पेक्षाया निर्बीजत्वात् ।

अथाकाशव्याप्तिर्व्यापकसामानाधिकरण्यरूपैव वाच्या, न तु तद्वदन्यावृत्तित्वरूपा, केवलान्वयिधर्मस्य प्रकृत्यर्थतावच्छेदकता यत्र तत्राप्रसिद्धेः । एवं चोद्देश्यतावच्छेदकव्याप्तिविशिष्टपर्याप्त्यपेक्षया तयो रव्यापकतादृश धर्मवत्त्वस्यैव सम्बन्धत्वमुचितमिति चेत् तर्हि 'आकाश [illegible] द्वा' वित्यादि-वाक्यजन्यशाब्दबोधदशायामपि आकाशावित्यादिवाक्यात् द्वित्वबोधापत्ति. । तथा हि — 'आकाशो न द्वा' वित्यादितो द्वित्वावच्छिन्नभेद प्रतीयते, स च [illegible] स्वव्यापकाकाशत्ववत्त्वादिसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताक —तादृश सम्बन्धेन द्वित्ववतो ऽप्रसिद्धेः । अपि तु पर्याप्तिसम्बन्धावच्छिन्नप्रतियोगिता-वच्छेदकताक एव । तत्काले च पर्याप्तिसम्बन्धेन द्वित्वविशिष्टबुद्धिरेव प्रति बध्यते न नूतनपरम्परासम्बन्धेन तद्विशिष्टबुद्धिरपीति ।

अथाकाशो न द्वावित्यादौ केवलपर्याप्तिसम्बन्धावच्छिन्नप्रतियोगिता-वच्छेदकताकभेदो नञा वार्यितु [illegible] शक्यते, आकाश ऽप्युत्तमुक्त्वा

गानुपपत्तिरिति द्वित्वान्वयितावच्छेदकमपेक्षाबुद्धिविशेषविषयत्वादिरूपमुभया दिनिष्ठ साहित्य द्वन्द्वसमासार्थो वाच्य , तथा च मीमांसकमतप्रवेश इति चेत् यत्र एकधर्मस्य द्वित्वाद्युद्देश्यतावच्छेदकता तत्रैवोद्देश्यतावच्छेदकव्याप्तिविशिष्टपर्याप्ति संसर्गतानियम । यत्र धर्मद्वयादेस्तथात्व तत्र केवला पर्याप्ति समवाय एव वा संसर्ग इत्युपगमात् , विनैव साहित्यस्यान्वयिता-वच्छेदकता एकैकतापर्येण घवखदिरावित्यादिप्रयोगोपपत्ते ।

न चैवमेकैकधवखदिरादितात्पर्येण धवौ खदिरावित्यादिप्रयोगापत्ति , तादृशवाक्यद्वयनिष्पन्नसमूहालम्बनजन्यसमूहालम्बनशाब्दबोधस्य नानाधर्माविच्छिन्नोद्देश्यताकतया शुद्धपर्याप्तेरपि संसर्गतया ऽवगाहनसम्भवादिति वाच्यम् , यत्र नानाधर्मावच्छिन्नविशेष्यतानिरूपिता एकैव द्वित्वादिप्रकारता तत्रैव शुद्धाया पर्याप्ते समवायस्य वा संसर्गतया भानात् , धवौ खदिरावित्यादिवाक्यजन्यसमूहालम्बनशाब्दबोध विशेष्यताभेदेन प्रकारताभेदादुद्देश्यतावच्छेदकधवत्वादिव्याप्तिविशिष्टपर्याप्ते संसर्गतानियमेन एकैकधवखदिरादितात्पर्येण तथा प्रयोगासम्भवात् ।

'धवखदिरौ' इत्यादिसमासोत्तरद्विवचनेन धवत्वखदिरत्वाद्यवच्छिन्ननानाविशेष्यतानिरूपितैकद्वित्वादिप्रकारताशालिज्ञानमेव जन्यते । तादृशवाक्यजन्यबोधस्य समूहालम्बनात्मकतया विशेष्यताभेदेन प्रकारताभेदाभावात् । यथा हि समूहालम्बनात्मके 'खड्गी चैत्र कुण्डली' त्याकारकनानाविशेषणकैकविशेष्यकज्ञाने नानाप्रकारतानिरूपिता एका विशेष्यता तथा तथाविधे धवखदिरावित्याद्याकारक नानाविशेष्यकैकविशेषणकज्ञाने विशेष्यताभेदे ऽप्यभिन्नैव द्वित्वादिप्रकारता, अन्यथा समूहालम्बनतस्तद्वैलक्षण्यानुपपत्ते । समासघटकधवखदिरादिपदानामेकवाक्यतानुपपत्तेश्च । तत्प्रयोज्यविषयतया साक्षात्परम्परया वा निरूपिता या विषयता तत्प्रयोजकत्वस्यैव तदेकवाक्यतापदार्थत्वात् । न चैतादृशैकवाक्यताविरहेऽपि क्षति विरह , तथा सति समासस्यैवानुपपत्ते । 'अयमेति पुत्रो राज्ञ पुरुषो ऽपसार्यताम्' मित्यादौ राजपुरुषपदादीनां समासवारणाय समर्थपदयोरेव समासानुशासनात् सामर्थ्यस्य च विशिष्टैकवाक्यतारूपत्वात् ।

तद्वदन्यावृत्तित्वम् । व्यतिरेकिविधेयस्थले तादृशधर्मस्य चोद्देश्यतावच्छेदकतापर्याप्तिसम्बन्धेन बोध्यम् । 'अत्र घटौ स्तः' इत्यादौ एतद्देशवृत्तित्वादिरूपविधेयस्य तद्वदन्यावृत्तित्वरूपव्याप्तिसम्बन्धेनैतद्देशवृत्तित्वादिरूपविधेयस्याधिकरणत्वे घटपटादिनिष्ठद्वित्वमेव घटत्वव्याप्यपर्याप्तिरूपोद्देश्यतावच्छेदकतापर्याप्तिसम्बन्धावच्छिन्नतद्वत्त्वं च घटादौ बाधितमिति न तादृशवाक्यस्य प्रामाण्यम् । अधिकरणस्य घटद्वयादिमत्त्वे च घटत्वादिव्याप्य द्वित्वमेव तथेति घटत्वादिव्याप्यपर्याप्तिसम्बन्धेन तद्वत्त्वं घटादावबाधितमिति तादृशवाक्यस्य प्रामाण्यं निर्वहति । केवलान्वयिविधेयकस्थले च द्वित्वत्वाद्यवच्छिन्नव्यापकत्वमेव संसर्गघटकम् । केवलान्वयिनि तादृशव्यापकताया असत्त्वात् । न तु तत्तद्वद्वृत्तित्वावच्छिन्नव्यापकत्वमिति न पूर्वोक्तदोषावकाशः ।

'घटावानयति चैत्रः' इत्यादौ चैत्रकर्तृकानयनकर्मत्वादिव्याप्य द्वित्वादिमन्निष्ठनिरूपकताकाधेयत्वादिसम्बन्धेन कर्मत्वादौ घटादेरन्वयो व्युत्पन्नः । तेन चैत्रादौ एकघटादिव्यक्तिमात्रानयनकर्तृत्वे न तादृशप्रयोगः । द्वित्वादिमत्त्वं च प्रकारतावच्छेदकीभूतघटत्वादिव्याप्यपर्याप्तिसम्बन्धेन बोध्यम् । तेन चैत्रस्य पटादिसहितैकघटादिकर्मकानयनकर्तृत्वेऽपि न तादृशप्रयोगः । एवमन्यत्राप्यूहनीयम् ।

यत्रानेकवृत्तिधर्मो द्वित्वाद्यवच्छेदकतया भासते तत्रोभयादिनैव सम पदार्थे तस्यान्वयः । यत्रैकमात्रवृत्तिः तत्र तत्तदेकेनापि व्युत्पत्तिभेदावलम्बनात्कार्यकारणभाववैचित्र्याच्च सर्वं समञ्जसमित्यपि वदन्ति ।

अथ घटादिव्यक्तिभेदेनानयनकर्मता भिन्नेति प्रतिबद्धधानस्य पुंसो घटावानयतीतिवाक्याच्छाब्दबोधानुपपत्तिः तस्य कर्मतात्वावच्छेदेनाधेयतासंसर्गावच्छिन्नप्रतियोगिताकस्य द्वित्वावच्छिन्नघटाभावस्य निश्चयसम्भवात् । तस्य द्वित्वादिना तादृशसंसर्गेण घटादावंशिकधीप्रतिबन्धकत्वादिति चेन्न उभयत्वावच्छिन्नाभाववत्ताज्ञानमुभयत्वावच्छिन्नाभावरूपताधेयतासंसर्गकवगाहिज्ञानं प्रति प्रतिबध्नाति न तु केवलं विशेष्यविशेषणाभावेति रीत्या जायमानमुभयत्वादिविशिष्टज्ञानम् । अतो विशेषदर्शनात् तादृशशाब्दबोधविषयत्वाभावे उभयत्वा

यत्वाच्छिन्ननिरूपितत्वावगाहिप्रमात्मकज्ञानं न भवत्यत्र । अपि तु तदंशे तदनवगाहिप्रमात्मकं ज्ञानमिति । उभयत्वावच्छिन्ननिरूपिताधेयत्वं चोभयादिवृत्तावेकस्मिन्धर्मे एव न तु प्रत्येकमात्रवृत्तावपीति कर्मत्वांशे तादृशाधेयत्वावगाहिज्ञानस्य भ्रमत्वमित्यवधेयम् ।

सङ्ख्याश्च प्रकृत्यर्थतावच्छेदकगता क्वचित्प्रतीयन्ते । यथा 'सप्तभी व्रीहियवा' वित्यादौ । एतत्तत्त्व प्रागेवाभिहितम् । विरुद्धसङ्ख्यावाच्छ वाचकशतादिपदोत्तरविभक्त्युपस्थाप्या सङ्ख्या प्रकृत्यर्थतावच्छेदकसङ्ख्यायामेवान्वेति । यथा 'शतमेकं' 'द्वे शते' 'त्रीणि शतानि' त्यत्र दशत्वादौ एकत्वद्वित्वबहुत्वानामन्वय । अत एव च एकशतद्विशततात्पर्येण न शतानीति प्रयोग । तत्र प्रकृत्यर्थस्य शतस्य बहुत्वान्वययोग्यत्वे ऽपि प्रकृत्यर्थतावच्छेदकशतत्वे बहुत्वान्वय एव बहुवचनस्य साकाङ्क्षत्वात् तात्पर्यविरहात् ।

न चैकशते ऽपि नानापुरुषीयापेक्षाबुद्धिजन्यनानाशतत्वसम्भवादेकशतनिष्ठशतत्वे ऽपि बहुत्वान्वययोग्यता ऽस्त्येवेति वाच्यम् । परस्परसमानाधिकरणद्वयावृत्तिबहुत्वस्यैव शतादिपदोत्तरबहुवचनार्थत्वात् । तादृशबहुत्वस्य चैकशतादिवृत्तिनानाशतत्वादौ बाधात् ।

अथ वा तत्रापि बहुत्वमेव बहुवचनार्थं । परस्परसमानाधिकरणद्वयावृत्तित्वमपि ततो निरूपकं सम्बन्ध ।

यत्तु 'द्वे शते' 'त्रीणि शतानी' त्यादौ सङ्ख्यैव शतादिशब्दार्थः, न तु सङ्ख्येयम्, सङ्ख्येयस्य तदर्थत्वे "विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः" रित्यनुशासनविरोधात् द्विवचनादिसमुत्पत्त्यनुपपत्ते । 'गवां शतानी' त्यादौ षष्ठ्यर्थान्वयानुपपत्तेश्च । न चाभेदः षष्ठ्यर्थः, तथा सति 'ब्राह्मणा दश' इत्यत्र ब्राह्मणानां दशेत्यपि स्यात् । अस्माकं चादशतः सङ्ख्याः सङ्ख्येये वर्तन्ते, अतः परं सङ्ख्याने सङ्ख्येये चेत्यनुशासनाद्दशादिशब्दानां शतादिशब्दवत्सङ्ख्यानार्थकत्वाभावात् । दशत्वादिसङ्ख्यायाः पदार्थतावच्छेदकत्वेन तु । षष्ठ्यर्थसम्बन्धान्वयासम्भवेन न तथा प्रयोग इति =

तदसत्, 'गवां शतानि' इत्यादौ सङ्ख्यायाः प्राधान्येन शतादि-
शब्दवाच्यत्वे 'गवां शतं दद्यात्' इत्यादौ शतादिपदार्थस्य सङ्ख्याया दाना-
दिकर्मत्वान्वयायोग्यतया प्रामाण्यानुपपत्तिः । 'गवां शतं शुक्लम्' इत्यादौ
सङ्ख्यायां शुक्लाद्यभेदान्वययोग्यताविरहात्तदनुपपत्तिश्च । तस्माद्दशादिव-
द्विंशति शतादिशब्दा अपि सङ्ख्यावच्छिन्नवाचका एव। न तु पञ्चविंशत्यन्त-
पदवत्सङ्ख्यावाचकाः । द्व्यर्थकत्वेऽपि सङ्ख्यायाः स्वप्रकृतिकविभक्त्यर्थ-
सङ्ख्यावच्छिन्नत्वान्वयप्रकृतिकपदार्थसम्बन्धान्वयसाकाङ्क्षतया च तेषां
सङ्ख्यानामेकत्वप्रवादः, न तु दशादिशब्दानां तथात्वम्, दशादिविशिष्टगतान्तरेण
ब्राह्मणानां दशत्वादिप्रयोगविरहादिति तेषां सर्वेषामपि नित्यबहुत्वप्रवाद इति
"विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः । सङ्ख्यायां द्विबहुत्वे स्तः"
इत्यनुशासनमप्युक्तार्थे तात्पर्यग्राहकम् । एवं द्विबहुशब्दोत्तरैकवचनद्विवचन-
बहुवचनानि च न सङ्ख्याबोधकानि, उद्देश्यतावच्छेदकविधेययोरैक्यनैकत्वान्वये
आकाङ्क्षाविरहादिति, तदुत्तरं प्रथमाविभक्तिः साधुतामात्राय । नित्यबहु-
वचनान्तदारादिशब्दोत्तरं प्रथमाबहुवचनमपि साधुत्वमात्रार्थकमेव, यत्रैकत्वादि-
सङ्ख्यातात्पर्येण तादृशशब्दः प्रयुज्यते तत्र बहुत्वान्वये योग्यताविरहात् ।

यत्तु तद्गतगुणादिसाधारणबहुत्वस्य तत्रान्वय इति, तन्न शोभनम्,
प्रकृत्यर्थतावच्छेदकव्याप्यपर्याप्तिसम्बन्धेनैवानेकवृत्तिसङ्ख्यान्वयस्य व्युत्पन्नतया
तादृशसम्बन्धेन तथाविधबहुत्वान्वये योग्यताविरहात् । अन्यथा उदासीनघटप-
टादिसाधारणबहुत्वस्याप्यन्वयसम्भवेन तद्गतगुणादिसाधारणबहुत्वानुधावनं वा-
ऽप्यस्वरसत्वात् ।

अथ अजहत्स्वार्थलक्षणया गुणादिसाधारणधर्मावच्छिन्न एव प्रकृत्यर्थ
इति चेत् तर्हि बहुत्वेन भासमानेषु गुणादिष्वपि पदार्थान्तरान्वयः स्यात् ।
तथा च 'आपो द्रव्याणि, दारा अस्मिन् गृहे सन्ति' इत्यादिवाक्यानामप्रमाणतापत्तिः ।
गुणादिषु द्रव्याभेदग्रहस्य तत्तादवस्थ्यात् । मुख्यार्थमात्रपरतादृशशब्दानां
बहुवचनाद्यनुपपत्तेश्चेति न किञ्चिदेतत् । आनन्दादिपदार्थे एकत्वद्वित्वा-
न्वययोग्यतासत्त्वेऽप्यसाधुत्वादेव तदुत्तरमेकवचनं न प्रयुज्यते इति
ध्येयम् ।

न्वयस्तद्विशेष्यकसंख्यान्वयबोधस्यैवाख्यातेन जननात्, तादृशभावनान्वयबोधे विशेष्यश्च प्रथमान्तपदोपस्थाप्य एव । 'चैत्र पचति तण्डुल' मित्यादौ चैत्रादि. साक्षादेव भावनाविशेष्य । 'चैत्रेण पच्यते तण्डुल' इत्यादौ तु परम्परया । चैत्रादिनिष्ठभावनाजन्यफलशाली तण्डुल इत्याकारबोधस्यैव सर्वोदयात् । तस्मात्तिङादेरपि सख्याबोधकत्वमावश्यकमिति —

तत्र विचारसहम् । तथा हि—कर्त्रादिनिष्ठसंख्यान्वयबोधाननुकूलत्वं यदि तादृशबोधोपधायकज्ञानविषयत्वाभाववत्त्वं तदा यादृशाख्यातादिज्ञानेन सहकार्यन्तरविरहात्तादृशबोधो न जनितस्तद्योगे तृतीयाद्यापत्तिः । यदि च तादृशबोधस्वरूपयोग्यज्ञानविषयत्वाभावस्तदा यत्रादिसमभिव्याहृतात्मनेपदादिज्ञानस्यापि तादृशबोधस्वरूपयोग्यत्वात्तत्स्वरूपयोग्यज्ञानाविषयतिङाख्यातस्यैवाप्रसिद्धः ।

अथ कर्त्रादिविशेष्यकसंख्यान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयितानिरूपकत्वमेव तादृशबोधाननुकूलत्वम् । 'चैत्र पचती' त्यादिवाक्यघटकतिङादिविषयिता चैत्रादिविशेष्यकसंख्यान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदिका । तादृशान्वयबुद्धित्वावच्छिन्नं प्रति चैत्रादिपदसमभिव्याहृततिङादिपदज्ञानस्य हेतुत्वात् । 'चैत्रेण पच्यते तण्डुल' इत्यादिवाक्यघटकतादिपदविषयिता च न तादृशी, चैत्रादिपदसमभिव्याहृततादृशपदज्ञानत्वेन तादृशबुद्धित्वावच्छिन्नं प्रत्यहेतुत्वात् ।

न च 'चैत्र पचते' इत्यादौ चैत्रादिविशेष्यकाख्यातार्थसंख्यान्वयबोधोत्पत्त्या चैत्रादिपदसमभिव्याहृततादिपदज्ञानत्वेन तादृशान्वयबुद्धित्वावच्छिन्नहेतुताऽक्षतैवेति 'चैत्रेण पच्यते' इत्यादिवाक्यघटकीभूततादिपदविषयितापि तादृश्येवेति वाच्यम्, 'चैत्रेण पचते' 'चैत्र पच्यते' इत्यादिवाक्याच्चैत्रादिविशेष्यकस्य भावनायां सख्यायाश्चान्वयबोधस्यानुदयात् । तद्विशेष्यकतदुभयान्वयबोधे प्रथमान्तचैत्रादिपदसमभिव्याहृतशबादिविकरणोत्तरतत्तदाख्यातपदज्ञानत्वेन हेतुत्वात् 'चैत्रेण पच्यते तण्डुल' इत्यादिवाक्यघटकतादीनां तादृशसमभिव्याहारादिशून्यतया, तद्विषयितायां अतादृश-

/

त्वात् । 'चैत्र पच्यते' इत्यादित 'तण्डुल पच्यते' इत्यादितश्च चैत्र तण्डुलादिविशेष्यकसंख्यान्वयबोधोत्पत्त्या 'चैत्र पच्यते तण्डुल' इत्यत्र उभयविशेष्यकसंख्यान्वयबोधौपयिकतादृशसमभिव्याहारज्ञानविषयितया पच्य त इत्यादौ सत्त्वेन कर्तृकर्मणोस्तृतीयाद्वितीययोरप्रसक्तावपि न तादृशवाक्य व्युत्पन्ना प्रयुञ्जते । कर्तरि साक्षात्कर्मणि च दर्शितपरम्परया युगपद्भावनाविशेषण कान्वयबोधजनकताया आख्यातस्याव्युत्पन्नतया तादृशवाक्यादुभयविशेष्य कान्वयबोधासम्भवात् ।

न चाकाङ्क्षायोग्यतादिसत्त्वात्तत्र तादृशान्वयबोध इति वाच्यम्, अगत्या एकविधान्वयबोधे ऽपरविधान्वयबोधसामान्यस्तद्घटकतात्पर्यज्ञानस्य वा प्रतिबन्धकत्वोपगमात् ।

न च 'चैत्रेण तण्डुल पच्यते' 'चैत्रस्तण्डुल पच्यते' इत्यादि वाक्यद्वयविषयकसमूहालम्बनदशायामपि उभयविधान्वयबोधानुपपत्तिरिति वाच्यम्, तादृशैकविधान्वयबोधे तादृशान्यविधान्वयबोधपरत्वेनागृह्यमाणतथा विधाख्यातधर्मिकप्रवृत्तान्वयबोधपरत्वज्ञानस्य हेतुतया 'चैत्र पच्यते तण्डुल' इत्येतद्वाक्यात्तादृशद्विविधान्वयबोधवारणस्य दर्शितवाक्यद्वयात्तदुपपादनस्य च शक्यत्वात् ।

न च निरुक्तसंख्यानभिधानस्य तृतीयाद्वितीयानियामकत्वे 'चैत्रेण त्व दृश्यते,' 'चैत्र त्व पश्यति' इत्यादौ तृतीयाद्वितीययोरनुपपत्ति । कर्त्रादि विशेष्यकसंख्याप्रकारकान्वयबोधे पविकाकाङ्क्षाज्ञानीयविषयित्वनिरूपकत्वस्य त लाख्याते सत्त्वादिति वाच्यम्, कर्त्रादिपरयत्पदाख्यातपदयो समभिव्याहार संख्यान्वयबुद्धित्वावच्छिन्नप्रयोजकविषयित्वाऽनिरूपकत्वत्पदोत्तर तृतीयाविभ क्तिरित्येव नियमोपगमेन प्रथमस्थले चैत्रपरत्वपदाख्यातपदयोर्द्वितीये च त्वत्परचैत्राख्यातपदयो समभिव्याहारस्यैव तद्विशेष्यकसंख्यान्वयबोधप्रयोजकतया क्रमेण चैत्रपदत्वपदाभ्या तृतीयाद्वितीययोरनुपपत्त्यनवकाशादिति चेत्,

"अनभिहिते" इत्यधिकारे कर्तृकरणयोस्तृतीयेत्याद्यनुशासनस्य किं प्रयोजनमिति वक्तव्यम् । 'चैत्र पचति' 'तण्डुल पच्यते' इत्यादौ

'चैत्रेण विजेष्यते मैत्रः' इत्यादौ तृतीयानुपपत्तेश्च । 'विजेष्यते मैत्रः' इत्यादितः मैत्रकृतिबोधात्तादृशाख्यातपदमैत्रपदयोः समभिव्याहारस्य कृतिबोधौपयिकत्वात् । किं तु तत्तात्पर्यं शब्दतस्तमेव । तथा च 'चैत्रेण पश्यते' इत्यादावाख्यातस्य कर्तृत्वादितात्पर्यकत्वे तृतीया असाधुरेव । तथा च 'चैत्रेण पचती' त्यादावाख्यातस्यार्थाविवक्षया तृतीयायाः साधुत्वे ऽपि परस्मैपदस्यासाधुत्वान्न प्रयोगः, परस्मैपदस्यासाधुत्वं च धात्वर्थविशेष्यस्य प्रत्ययेनाविवक्षणे "भावकर्मणोः" रिति सूत्रेणात्मनेपदनियमात् । आख्यातार्थविवक्षया न 'चैत्रेण पचते' इत्यादिप्रयोगः, शपादिविकरणस्यासाधुत्वात् । कर्तृत्वतात्पर्यकसार्वधातुकयोगे शप्त्वं तत्साधुत्वात् । कर्तृत्वकर्मत्वोभयतात्पर्येण 'मैत्र पच्यते तण्डुल' इत्यादयस्तु न प्रयोगाः । तदेकतरबोधे ऽप्यतत्परत्वेनागृह्यमाणाख्यातधर्मिकप्रकृतान्वयबोधपरत्वज्ञानस्य हेतुत्वात् । 'चैत्रेण पच्यते तण्डुल' इत्यादौ कर्तृत्वादावाख्यातस्य तात्पर्यग्रहे कर्मत्वान्वयबोधो ऽपि न भवत्येव ।

अथ 'पक्वानि भुङ्क्ते चैत्र' 'ओदनं पक्त्वा भुज्यते' इत्यादौ कृत्वा क्रमेण कर्तृकर्मणोरनभिधानाच्चैत्रपदौदनपदादुत्तरं तृतीयाद्वितीये कथं न स्याताम् ? न च कृतानभिधाने ऽपि आख्यातेन तदभिधानान्नानभिहितत्वम्, समभिव्याहृतपदाभिहितत्वसामान्याभाववत्त्वस्यानभिहितपदेन विवक्षणात् । समभिव्याहृतोक्तिकरणाच्च 'चैत्रेण गम्यते ग्रामस्तु मैत्रो गच्छती' त्यादौ न तृतीयाद्वितीययोरनुपपत्तिः । 'गच्छति, गम्यते' इत्याख्यातस्य तत्तत्पदासमभिव्याहृतत्वादिति वाच्यम्, तथा सति 'भुञ्जानेन चैत्रेण पच्यते' 'भुक्त्वा ओदनं पचती' त्यादौ तृतीयाद्वितीययोरनुपपत्तिः, कृता कर्तृकर्मणोरभिधानात् । कृता तत्र भोजनकर्तृत्वतत्कर्मत्वयोरभिधाने ऽपि पाककर्तृत्व तत्कर्मत्व चानभिहितमिति चेत्तर्हि प्रकृते ऽपि तदनभिहितमेव । न च प्रधानक्रियानिरूपितकर्तृत्वाद्यनभिधाने तृतीयादेः साधुतेति । तदुक्तम्—"प्रधानशक्त्यभिधानगुणशक्तिरभिहितवत्प्रकाशते" इति, शक्तिं कर्तृत्वादिरूपमिति वाच्यम्, तथापि "चैत्रेण दृश्यमानं घटं मैत्रः पश्यती" त्यादौ ज्ञानभेदेन विषयताभेदाभावात् चैत्रदर्शनमैत्रदर्शनोभयनिरूपितविषय-

स्वरूपकर्मताया कृताभिधानाद् द्वितीयानुपपत्तिरिति चेन्न, तत्तत्प्रातिपदिकार्थविशेषणत्वमात्रेण कर्तृकर्मत्वाद्यविवक्षाया एव तदनभिधानपदार्थत्वात्। तत्तत्प्रातिपदिकार्थविशेष्यतया कर्मत्वकर्तृत्वादिविवक्षायां द्वितीयादिविभक्तेः साधुत्वमित्यर्थे तात्पर्यस्य पर्यवसितत्वात् । शेषमाख्यातार्थविचारावसरे विवेचयिष्यत इत्यलमत्राधिक्येन ।

आख्यातद्विवचनबहुवचनयोस्तु सङ्ख्याबोधकत्वमावश्यकम् । 'चैत्रो मैत्रश्च गच्छतः' 'चैत्रो मैत्रो देवदत्तश्च गच्छन्ति' इत्यादौ,

"चन्द्रे कलङ्कः सुजने दरिद्रता
विकासलक्ष्मी कमलेषु चञ्चला ।
सुखप्रसादः सधनेषु सर्वदा
यशो विधातुः कथयन्ति खण्डितम्"

इत्यादौ च द्वित्वबहुत्वबोधकसुपो ऽभावात् । न च तत्र सुपैकवचनस्यैव द्वित्वबहुत्वादौ लक्षणास्त्विति वाच्यम्; आनुशासनिकातिरिक्तार्थे सुब्विभक्तेर्लक्षणाया अनभ्युपगमात् । अन्यथा 'चैत्रो मैत्रश्च गच्छत' इत्यादाविव छन्दसि लक्षणयैव स्वादिना द्वित्वादिबोधनसम्भवात् । औत्वाद्यादेशस्मृतिद्वारा द्वित्वादिबोधनिर्वाहाय छन्दसि 'सुपां सुलुक्' इत्यादिसूत्रेण औत्वादिस्थाने स्वाद्यादेशस्य वैयर्थ्यात् । चैत्रादिपदोत्तरैकवचनस्य द्वित्वादिलाक्षणिकत्वे तदुपकृष्यर्थचैत्रादिसाधारणद्वित्वादिबोधस्योत्पत्त्युत्पत्तिविरोधेनानुपपत्तेश्च । आख्यातार्थसङ्ख्यान्वयबोधे च समानविशेष्यकतदर्थभावनान्वयबुद्धिसामग्री अपेक्षिता, भावनाया धात्वादिप्रकारके तात्पर्यादिग्रहदशायां च उक्तस्थले द्वित्वान्वयबोधात् । भावनाया अविशेषे धात्वर्थादौ सङ्ख्यान्वयबोधाच्च नातिप्रसङ्गः । सङ्ख्यान्वयबुद्धिसामान्यं प्रति स्वातन्त्र्येण हेतुता, तदभावे ऽपि आख्यातवचनयोग्यताविशेषादिघटितसामग्र्या भावनान्वयादिसङ्ख्यान्वयबोधस्य कदाचिदभावात् । सङ्ख्यान्वयबोधसाधारणभावनान्वयबोधसाधारणार्थाभावात् तादृशार्थोपकारकोपादानसम्भवात् ।

न च तादृशकारणताया भावनान्वयबुद्धित्वं सङ्ख्यान्वयबुद्धित्वं वा जन्यतावच्छेदकमुपेयते इत्यत्र विनिगमनाविरहः । सङ्ख्यामविषयीकृत्यापि भावनान्वयबोधस्यानुभवसिद्धत्वात्, द्वितीयस्य जन्यतावच्छेदकत्वासम्भवादिति दिक् ।

अथ गुणादिवाचकपदोत्तरद्विवचनबहुवचनयोः कथं द्वित्वादिबोधकता ? सङ्ख्याया गुणत्वेन गुणादौ बाधात् । न च तत्र स्वाश्रयसमवेतत्वादिसम्बन्धेन द्रव्यगतं द्वित्वादिकमेव भासत इति वाच्यम्, एकव्यक्तावपि तादृशसम्बन्धेन द्वित्वादेः परिसमाप्ततया एकमात्रतात्पर्येणापि द्विवचनाद्यापत्तिरिति चेत्, मैवम् । अपेक्षाबुद्धिविषयत्वमेव तदुत्तरद्विवचनादिना बोध्यते । तच्चैकमात्रवृत्तिधर्मस्य प्रकृत्यर्थतावच्छेदकत्वस्थले प्रकृत्यर्थतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिसम्बन्धेन प्रकृत्यर्थेऽन्वेति । अन्यत्र तु शुद्धपर्याप्तिसम्बन्धेनेति न द्व्यादिस्थले दोष इति विदुषां परामर्शः ॥

इति प्रथमाकारकम्

---

व्यापारज्ञानतादृशपदज्ञानजन्यफलादुपस्थितघटितसामग्र्यास्तादृशान्वयबोधोत्पादप्रयोजिकाया असत्त्वेनोक्तस्थले तदापत्त्यसम्भव इति वाच्यम्, यत्र गमनादिपदादेव लक्षणया शक्तिभ्रमेण वा स्वातन्त्र्येण फलोपस्थितिस्तत्र फलविशेष्यकस्पन्दभेदान्वयबोधप्रसिद्ध्या गमनपदसमभिव्याहारतज्जन्यफलोपस्थितिघटितसामग्र्याः फलविशेष्यकस्पन्दत्वावच्छिन्नभेदान्वयबोधप्रयोजकतया आवश्यकत्वात्, तदबलेन शक्तिभ्रमाधीनबोधे ऽपि फलांशे स्पन्दभेदादिभानप्रसङ्गात्। एवं च फलव्यापारयोः पृथक्शक्तिस्वीकारपक्षे ऽपि न निस्तारः। तथात्वे ऽपि हि गमनं न स्पन्द इत्यादौ फले शक्तिभ्रमवता स्पन्दभेदान्वयबोधसम्भवेन तादृशप्रयोगापत्तेर्दुर्वारत्वादिति चेन्न, तद्विशेष्यकवृत्तिज्ञानजन्यतदुपस्थितिं यत्तावच्छेदककोटौ तादृशोपस्थित्यव्यवहितोत्तरत्वनिवेशनमावश्यकम्। निक्षिप्य तत्तत्पदमन्तर्भाव्यैव पदार्थोपस्थितरैकविधबोधनानाहेतुतायाः व्यवस्थापितत्वात् एकपदाधीनताद्रूप्यकशाब्दबोधे पदान्तरवृत्तिज्ञानजन्यतदुपस्थितव्यभिचारस्य प्रकारान्तरेण वारणासम्भवात्। एवं च धात्वर्थतावच्छेदकफले द्वितीयार्थान्वयबोधे ऽपि क्षतिविरह, तत्र एतादृशकारणस्य व्यभिचाराप्रसक्तेरिति वदन्ति।

अत्रेदं चिन्त्यते। व्यापारमात्रस्य धात्वर्थतायामपि सर्वानुपपत्तीनासुद्धृतत्वात् फलावच्छिन्नव्यापारस्य गुरुतया तथात्वमनुचितम्। अथ फले द्वितीयादेः शक्त्यन्तरकल्पनामपेक्ष्य धातोर्विशिष्टे शक्तिकल्पनमेवोचितम्। न च भवन्मते ऽप्याधेयत्वे द्वितीयादेः शक्त्यन्तरस्य कल्पनीयत्वात्तदंशे साम्यमिति वाच्यम्, *'ग्राममध्यास्ते, ग्राममधिशेते, ग्रामं समुपैति'* इत्यादौ द्वितीयाया सर्वमतएवाधेयत्वबोधकतया द्वितीयादेः फलवाचकत्वमते ऽपि आधेयत्वाचकताया आवश्यकत्वात्।

न च द्वितीयायाः संयोगादिवाचकत्वमते आधेयत्वे तस्या लक्षणैव न तु शक्तिरिति वाच्यम्, आधेयतात्वस्याखण्डतया संयोगत्वादिसमशरीरत्वात् संयोगत्वावच्छिन्ने तदवच्छिन्ने वा शक्तिः कल्प्यते इत्यत्र विनिगमकासम्भवात्। अस्तु वा समाप्याधेये ऽपि लक्षणैव, शक्तिस्तु सप्तम्या एव। यदि च द्वितीयादेः फलबोधकत्वमते फले ऽपि तस्या लक्षणैव न

न्वयएव, तादृशद्वितीयाया साकाङ्क्षत्वकल्पनाद्व्यापारे तदुपस्थापिताधेयत्वा-
न्वयासम्भवात् । सप्तम्यधीनाधेयत्वोपस्थितिसप्तमीसमभिव्याहारज्ञानघटिताया
एव सामग्र्यास्तादृशान्वयबोधनियामकत्वात् । द्वितीयासप्तम्योः समानार्थक
त्वे ऽपि व्युत्पत्तिभेदज्ञापनायैव पृथक् पृथक् सूत्रेण तयोर्विधानात् ।

अथ अधस्संयोगावच्छिन्नस्पन्दस्य पतधात्वर्थत्वात्, धात्वर्थतावच्छे-
दकीभूतफले आधेयत्वान्वयतात्पर्येण भूमिं पततीति प्रयोगापत्तिः । न
च द्वितीयोपस्थिताधेयत्वप्रकारकफलविशेष्यकान्वयबोधे गम्यादिजन्यफलोप
स्थितिसमभिव्याहारज्ञानघटितसामग्र्येव प्रयोजिका, न तु पतधातुजन्य
तदुपस्थितिघटिता सामग्रीति नातिप्रसङ्ग इति वाच्यम्, पतधातुनैव यत्र
संयोगावच्छिन्नगमन लक्षणादिनोपस्थापितम् तत्र संयोगे द्वितीयार्थाधेयत्वा
न्वयात् ।

अत्राहुः—धातुजन्यशुद्धसंयोगावच्छिन्नस्पन्दोपस्थितेः शाब्दबोधका
रणताया मवच्छेदकघटकसंयोगविषयताया मधिकरणानवच्छिन्नत्व विशे-
षण देयम्, तथा च तादृशविषयताशालिसंयोगोपस्थित्यादिघटितसामग्र्या
एव संयोगविशेष्यकद्वितीयोपस्थाप्याधेयत्वान्वयबोधप्रयोजकत्वोपगमान्नातिप्रस
ङ्ग । न चैवमपि फलानवच्छिन्नव्यापारबोधकतया पते सकर्मकत्वव्यव-
हारापत्तिर्दुर्वारैवेति वाच्यम्, आश्रयतानवच्छिन्नफलावच्छिन्नव्यापारबोधकत्व-
स्यैव तादृशव्यवहारनियामकत्वात् । उत्तरदेशानवच्छिन्न संयोग फल
धात्वर्थतावच्छेदकमिति नानुपपत्तिः । अत एवाग्निसंयोगावच्छिन्नक्रिया
नुकूलव्यापारस्य जुहोत्यर्थतया धात्वर्थतावच्छेदकसंयोगाश्रयस्याप्यग्नेर्न तत्कर्मता ।
आश्रयानवच्छिन्नावच्छेदकताश्रयफलत्वविरहात् । संयोगनिष्ठाया धात्वर्थता
वच्छेदकताया आश्रयेणाग्निनाऽवच्छिन्नत्वात् । न चाग्निविशेषणसंयोगस्य धात्व-
र्थतावच्छेदकत्वे ऽग्नौ घृत जुहोतीत्यनन्वयप्रसङ्गः, उद्देश्यतावच्छेद
कविधेययोरैक्यादिति वाच्यम्, तत्र संयोगनिष्ठायामुद्देश्यताया वह्न्याधे
यतासमगणानवच्छेदकतया सप्तम्यर्थस्याग्निवृत्तित्वस्य च विधेयतया उद्देश्यता
वच्छेदकविधेययोरैक्यानवकाशात् । वस्तुतस्तु—तत्र वह्नेरनन्वये ऽपि
न क्षतिः । व्युत्पन्नाना तादृशप्रयोगस्याप्रामाणिकत्वात् । यत्कृते यह्नौ

जुहुया' दित्यादिस्थले च विधेयांशे ऽधिकावगाहनाभावस्त्वेवानुपपत्तिः । घृतादेश्चाश्रयानवच्छिन्नधात्वर्थतावच्छेदकतावत्क्रियारूपफलाश्रयत्वात् कर्मत्वो-पपत्तिः ।

यत्तु—धात्वर्थतावच्छेदकत्वं धातुवृत्तिग्रहविशेष्यांशे साक्षात्प्रकारत्वम्, तच्च क्रियायामेव न संयोगादौ ऽपीति नाग्नेर्जुहोतिकर्मतापत्तिरिति — तदसत् । 'अजां ग्रामं नयती' त्यादौ संयोगावच्छिन्नक्रियानुकूलव्यापारादिरूपे धा-त्वर्थे संयोगादेः साक्षादप्रकारतया तदाश्रयीभूतग्रामादेः कर्मत्वानुपपत्त्या नीवहादेर्द्विकर्मकत्वव्याघातात् ।

अथात्र ग्रामादेः प्रधानकर्मत्वं नास्त्येव, अपि तु गौणकर्मत्वमेव । अत एव तादृशकर्मत्वमाख्यातेन नाभिधीयते "प्रधानकर्मण्याख्येये लादीनाहु-र्द्विकर्मणाम्" इत्यनुशासनादिति 'अजा ग्रामो नीयते' इत्यादिको न प्रयोग इति चेत्तर्हि तत्र ग्रामादेरिवाग्नेरपि हुधात्वर्थतावच्छेदकतावच्छेदक-फलशालित्वेन गौणकर्मतापत्त्या 'वह्निं घृतं जुहोती' ति प्रयोगापत्ति-र्दुर्वारैवेति । अस्मन्मते चाश्रयानवच्छिन्नसंयोगविषयताशालिधातुजन्योपस्थिति-घटितसामग्र्या एव संयोगे द्वितीयार्थान्वयबोधप्रयोजकतया नैतादृशप्रयो-गापत्तिरिति ।

द्वितीयासमासविधानमुपपद्यते । धात्वर्थतावच्छेदकतावच्छेदकफले द्वितीयार्थान्वय एवाश्रयानवच्छिन्नफलोपस्थितेरपेक्षा ‘अग्निं जुहोती’ति वारणाय स्वीक्रियते इति वदन्ति ॥

तदपि न शोभनम् । तथा सति भूम्यादिपदोत्तरं कदाचित्सप्तमी कदाचिद् द्वितीयेत्यत्र नियामकाभावप्रसङ्गात् । व्यापारांशे आधेयत्वविवक्षाया सप्तमी फलांशे तद्विवक्षाया द्वितीयेत्यस्योक्तयुक्त्या फलांशएव सप्तम्यर्थान्वय स्यावश्य स्वीकरणीयतया वक्तुमशक्यत्वादिति ।

“ब्राह्मणाय धनं ददाती” त्यादौ स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूला इच्छा धात्वर्थः । तादृशस्वत्वरूपधात्वर्थतावच्छेदकफलएव द्वितीयार्थान्वयः । उपेक्षायामतिप्रसङ्गवारणाय परस्वत्वनिवेशः । दानं च न सम्यं दानस्वत्वजनकम्, अपि तु तत्स्वीकार एवेति मते तु स्वस्वत्वध्वंसानुकूलपरस्वत्वप्रकारकेच्छैव ददात्यर्थः । तत्र स्वस्वत्वध्वंसरूपफलाश्रयत्वाद्धनस्य कर्मता । ‘धनं प्रतिगृह्णाती’त्यादौ स्वस्वत्वजनकेच्छारूपस्वीकारविशेषो धातोरर्थः । स्वस्वत्वरूपफले च द्वितीयार्थाधेयत्वान्वयः । ‘तण्डुलं पचती’त्यादौ रूपपरावृत्तिजनकतेजःसंयोगो धातोरर्थः । रूपादिपरावृत्तिरूपफले च तण्डुलादिवृत्तित्वान्वयः । ‘ओदनं पचती’त्यादौ ओदनादिपदस्य तन्निष्पादनतण्डुलादौ लक्षणा । अवयवावच्छिन्नपाकानभ्युपगमे च ‘तण्डुलं पचती’त्यादौ तण्डुलादिपदस्य तदारम्भकपरमाणुषु लक्षणा । ‘ओदनं भुङ्क्ते’ इत्यादौ गलाधोनयनं धात्वर्थः । तच्च गलाधस्संयोगावच्छिन्नक्रियानुकूलव्यापारः । तादृशक्रियारूपफल एव ओदनवृत्तित्वान्वयः । उक्तयुक्त्या गलाधोदेशस्य न कर्मत्वम् । एवमन्यसकर्मकधातूनामप्यर्था स्वयमूह्याः ।

‘गां दोग्धि पयः’ इत्यादौ द्विकर्मकधातुसमभिव्याहृतगवादिपदोत्तरद्वितीया क्रियाजन्यफलशालित्वादन्यदेव कर्मत्वं बोधयति । कारकाधिकारीयेण ‘अकथितं चे’ति सूत्रेणापादानत्वादिभिन्नधातुप्रतिपाद्यान्वयिधर्मान्तरावच्छिन्नस्यापि कर्मसंज्ञाभिधानात् । ‘गवा पयो दोग्धी’त्यादौ धातुप्रतिपाद्यान्वयिपयआदिसम्बन्धो न विवक्षितः, अपि तु क्षीराद्यन्वयी

स इति कर्मत्वाविवक्षया द्वितीयानवकाशः, किन्तु शौषिकी षष्ठ्येवेति ? अत्र धातुप्रतिपाद्यत्व तदर्थतावच्छेदककोटिप्रविष्टसाधारणम्, 'गां दोग्धी' त्यादौ धात्वर्थतावच्छेदककोटिप्रविष्ट एव द्वितीयार्थान्वयात् ।

तथा हि = क्षरणानुकूलव्यापारो दुहेरर्थः । द्वितीयार्थश्च जनकत्वसम्बन्धेन क्षरणान्वयी विभागः । विभागे चाधेयतया प्रकृत्यर्थगवादेरन्वयः । एवं च धात्वर्थतावच्छेदकक्षरणरूपफले प्रधानकर्मक्षीरायन्वितद्वितीयार्थस्यान्वय इति गोनिष्ठविभागानुकूलपयोनिष्ठक्षरणानुकूलव्यापारकर्ता मैत्र इति 'गां पयो दोग्धि मैत्र' इति वाक्याधीनो बोधः । न च विभागोऽपादानत्वमेवेति तद्विवक्षाया द्वितीया ऽनवकाशेति वाच्यम्; धातुवृत्तिप्रदविशेष्यान्वयिनो विभागस्यैवापादानत्वरूपत्वात् । 'वृक्षात्पर्णं पतती' त्यादौ स्पन्दरूपविशेष्यांश एव पञ्चम्यर्थविभागान्वयात् । वस्तुतो विभागावच्छिन्नक्षरणानुकूलो व्यापारो दुहार्थः । गोपदोत्तरद्वितीयार्थश्च विभागान्वयिनी वृत्तिरेव । न चैवं धात्वर्थतावच्छेदकफलशालित्वरूपं कर्मत्वमेवात्रापि प्रतीयत इति न 'अकथित चे' त्यस्य विषय इति वाच्यम्; धात्वर्थतावच्छेदकत्वस्य धातुवृत्तिप्रदविशेष्यांशे साक्षाद्विशेषणत्वरूपत्वात् । यत्र च क्षरणानुकूलव्यापारस्य धात्वर्थतया विवक्षित क्षरणान्वयिविभागश्च विभक्त्यर्थतया तत्रापादानत्वबोधिका पञ्चमी । एतेन कदाचित् गां दोग्धि पयः, कदा चित् गोभ्यो दोग्धि पय इत्यत्र नानियम । अथ वा 'गोभ्यो दोग्धि पय' इत्यत्रापि विभागो धात्वर्थतावच्छेदककोटिप्रविष्ट एव । 'वृक्षाद्विभजते' इत्यत्रेवाऽनभिहितत्वरूपापादानत्वनिरूपका पञ्चमी, आश्रयविवक्षाया च द्वितीया । अवधित्वाश्रयत्वादन्यदेव स्वरूपं गम्यमित्याशयः । अत एव क्षरणान्वयिनः परसमवेतत्वस्य द्वितीयार्थत्वात् पयोनिष्ठक्षरणस्य पयोनिष्ठविभागजनकत्वेऽपि न 'पयः पयो दोग्धि' इति प्रयोगः । परत्र च विभागान्वयितावच्छेदकतावच्छिन्नावेशता बोध्यम् ।

'दुग्धो गौः क्षीरं' मित्यादौ क्षरणान्वयिविभाग ऋजुत्वरूप गवादिनिष्ठप्रधानकर्मत्वमाख्यातार्थः । "अप्रधाने दुहादीनां" मित्यनुशासनात्

-क्षीरवृत्तित्वस्य धात्वर्थक्षरण एवान्वयः । आख्यातार्थक्षरणे च धात्वर्थव्यापारान्वयः । तथा च विभागावच्छिन्नक्षीरनिष्ठक्षरणानुकूलव्यापारजन्यक्षरणजन्यविभागाश्रयो गौरित्याकारको बोधः ।

अथ वा विभागक्षरणव्यापारेषु धातोः विशकलितेषु शक्तित्रयम्, विशिष्टलाभो ऽन्वयबलात् । कर्माख्यातस्थले चाकाङ्क्षावैचित्र्येण तेषां विशेष्यविशेषणभाववैपरीत्यात् । व्यापारजन्यक्षरणजन्यविभागपर्यन्तस्य धातुत एव लाभः । आश्रयत्वमेवाख्यातार्थः । एवं च क्षरणविभागयोर्न द्विधा भानम् । गौणकर्मासमभिव्याहृते 'दुह्यन्ते क्षीराणि' त्यादौ आत्मनेपदेन केवलेन धातुसहितेन वा विभागावच्छिन्नक्षरणाश्रयत्वरूपप्रधानकर्मत्वस्य बोधने ऽपि एकदा उभयविधकर्मत्वबोधनस्याव्युत्पन्नतया 'दुह्यन्ते क्षीराणि गौ' रित्यादयो न प्रयोगाः ।

'पौरवं गां याचते विप्रः' इत्यादौ स्वोद्देश्यकदानेच्छा याचत्यर्थः । प्रधानकर्मगवान्वितद्वितीयार्थः विषयित्वं धात्वर्थतावच्छेदकदानेऽन्वेति । सविषयकज्ञानादिरूपविषयोपहितेच्छाबोधकधातुस्थले इच्छाविषयविषयत्वमेव प्रधानकर्मत्वम् । अत एव 'घटो जिज्ञास्यते' इत्यादौ घटादः सन्नन्तकर्मता ।

अथैवं यद्वस्तुविषयकं दानमप्रसिद्धं तद्वस्तुरूपकर्मसमभिव्याहृतधातुघटितवचसां का गतिरिति चेत्, या गतिः 'गगनं दिदृक्षते' इत्यादिकस्य भ्रान्तपुरुषीयगगनादिप्रकारकदर्शनेच्छाबोधकवाक्यस्य । गगनविषयकचाक्षुषप्रकारकदर्शनेच्छाबोधकत्वेति चेत्, इहापि गोविषयिताप्रकारतानिरूपितस्वत्वेच्छानिष्ठविषयताया इच्छाबोधकवाक्यस्य विशेषादर्शिमात्रविषयता च समा । विवेचनीयं चेदमग्रे ।

पौरवपदोत्तरद्वितीयायास्तु वृत्तिरेवार्थः । तस्याश्च दाने ऽन्वयः । पौरवस्य तादृशदानाश्रयत्वमेवाप्रधानकर्मत्वम् । न चैवमिच्छारोपरूपदान-स्याश्रयत्वं कर्तृत्वमेवेति वाच्यम्, धातुजन्यप्रतिपत्तिविशेष्यीभूतदानाश्रयत्वस्यैव तत्कर्तृत्वरूपत्वात् । अत्र च दानस्य तादृशप्रतिपत्ताविच्छारूप

धात्वर्थे विशेषणत्वात् । 'चैत्रेण पौरवो गा याच्यते' इत्यादावप्युक्तक्रमेण चैत्रवृत्तीच्छाविषयगोकर्मकदानाश्रय इत्यन्वयबोधो बोध्य ।

यद्यपि निवृत्तयाच्ञा भिक्षैवेति "दुहियाचरुधिप्रच्छिभिक्षिचिञा" मित्यत्रार्थपरभिक्ष्युपादानेनैव चरितार्थतया याचेरुपादानमनर्थकम्, तथापि 'शतमान शिव सुरा' नित्यादौ याचतेर्न निवृत्तभिक्षार्थकतेति तदुपादानम् । तत्र हि व्यापारजन्यस्वप्रकारकेच्छा धात्वर्थः । इच्छाया प्रधानकर्मकस्वाणान्वितद्वितीयार्थनिरूपितया अन्वय । व्यापारे च सुरान्वितवृत्तित्वस्य द्वितीयार्थस्यान्वय, तथा च सुरवृत्तिव्यापारजन्यत्वप्रकारककरणेच्छाश्रय इत्यन्वयबोध ।

'गा व्रज रुणद्धी' त्यादौ देशान्तरसञ्चारविरोधिव्यापारो धात्वर्थ । सञ्चारविरोधित्व सञ्चारानुत्पादप्रयोजकत्वम् । अनुत्पादे प्रधानकर्मगावृत्तित्वान्वय । देशविशेषणे भेद च व्रजामिति द्वितीयान्तार्थत्वनप्रतियोगित्वान्वय । 'रुध्यते गा व्रज' इत्यादावन्वयबोध स्वयमूहनीय ।

'गुरु धर्मं पृच्छती' त्यादौ जिज्ञासाबोधकव्यापारो धात्वर्थ । बोधे गुरुवृत्तित्वस्य जिज्ञासाया धर्मविषयकत्वस्यान्वय । 'शिष्य धर्मं ब्रूते' इत्यत्र ज्ञानानुकूलशब्दप्रयोगो धात्वर्थ । ज्ञाने धर्मविषयकत्वस्य शिष्यवृत्तित्वस्य चान्वय इति तत्र भावतरम् । तथा सति यत्र जिज्ञासाविषयकचैत्रज्ञानेच्छया प्रश्नात्मदेवदत्तशब्दाच्च सामग्रीबलेन मैत्रस्यापि पृच्छकजिज्ञासाज्ञानम्, तत्र 'मैत्र पृच्छती' ति प्रयोगस्य, एव यत्र चैत्रज्ञानेच्छया ब्रूते देवदत्ताच्च मैत्रस्यापि ज्ञान तत्र 'मैत्र ब्रूते' इति प्रयोगस्य चापत्ते । साक्षाद्धात्वर्थविशेषणतानवच्छेदकलाभवतया तत्र गुर्वादीना प्रधानकर्मतया "अप्रधान दुहादीना" मित्यनुशासनविरोधेन 'पृच्छ्यते गुरुर्धर्म' 'शिष्य उच्यते धर्म' मित्यादिस्थले च लकारादिना तत्कर्मत्वाभिधानानुपपत्तेश्च । परं तु जिज्ञासाज्ञानाद्देश्यकप्रश्नधीनशब्द पृच्छत्यर्थ । ज्ञाने गुरुवृत्तित्वस्य शब्दे च धर्मविषयकत्वस्यान्वय । शब्दस्य च विषयता व्यापारानुबन्धिनी, ज्ञानस्य परम्परया शब्दरूपधात्वर्थविशेषणत्वात् । तदाश्रयभूतगुर्वादीनां कर्मता, धर्मस्य च धात्वर्थविषयतया प्रधानकर्मता, एवम् ज्ञानोद्देश्यकप्रश्नधीनशब्दोऽर्थ । ज्ञाने शिष्यवृत्तित्वस्य शब्दे

च धर्मविषयकत्वस्यान्वय । 'अजा ग्राम नयती' त्यादौ 'ग्राम भार वहती' त्यादौ च उत्तरदेशसयोगावच्छिन्नक्रियानुकूलव्यापाररूप प्रापण धातोरर्थ । तत्र उत्तरदेशसयोगे ग्रामस्य गौणकर्मण, क्रियारूपे च फले अजादिप्रधानकर्मणोऽन्वय । तथा च ग्रामवृत्तिसयोगजनकाजादिवृत्तिक्रियानुकूलव्यापारानुकूलकृतिमानित्यन्वयबोध ।

'अजा ग्राम नीयते, उह्यत भारो ग्राम चैत्रेण' इत्यादावुत्तरदेशसयोगावच्छिन्नक्रियारूप फल कर्माख्यातार्थ, तत्र च धात्वर्थस्य तादृशव्यापारस्य जन्यतासम्बन्धेन तस्य चाश्रयतासम्बन्धेन अजाभारादिरूपप्रधानकर्मण्यन्वय । ग्रामादिवृत्तित्वान्वयस्तु सयोग एव । एव च चैत्रकृतिजन्यो य सयोगावच्छिन्नक्रियानुकूलव्यापारस्तज्जन्यग्रामवृत्तिसयोगानुकूलकर्मवानजादिरित्यन्वयबोध ।

न च कारकविभक्त्यर्थस्य धात्वर्थ एवान्वयनियमात्प्रत्ययार्थाख्यसयोगे कथ ग्रामादिवृत्तित्वान्वय इति वाच्यम्, 'भूतले घट' इत्यादौ घटादिपदार्थे व्यधिकरणसम्बन्धार्थान्वयात्तादृशनियमासिद्धे ।

अस्तु वा धात्वर्थतावच्छेदकतावच्छेदकत्वय भासमाने सयोग एव तदन्वय । फलव्यापारयो पृथक्शक्तिमत चाश्रयत्वमेवात्मनेपदार्थ । सयोगावच्छिन्नक्रियारूपधात्वर्थ एव व्यापाररूपधात्वर्थविशेष्यतया आश्रयत्वविशेषणतया चान्वेति । तदेकदेशे सयोग एव ग्रामादिवृत्तित्वान्वय । चैत्रीयकृतिजन्यव्यापारजन्यग्रामवृत्तिसयोगानुकूलक्रियाश्रय अजादिरित्याकारको बोध ।

ज्ञानानुकूलशब्दश्च 'द्रव्य निरूपयती' त्यादौ धातोरर्थ । तादृशनिरूपणार्थस्य एकदेशे ज्ञानाशे आधेयत्वान्वयबोधे च न द्वितीयाया साकाङ्क्षता स्वीक्रियते, अपि तु विषयतया अन्वयबोध एवेति 'शिष्य द्रव्य निरूपयती' त्यादिर्न प्रयोग ।

यत्तु धात्वर्थो ज्ञानमेव, तदनुकूलव्यापारश्च णिजर्थ इति—तदसत्, धातोश्चुराद्यन्तर्गततया स्वार्थ एव णिचो विधानात् । अन्यथा 'निरूपयती' त्यस्य ज्ञापयतीत्यादिसमशीलतया 'शिष्य ज्ञापयती' त्यादिवच्छिष्य निरूपयतीति प्रयोगस्य दुर्वारत्वात् । 'अजा ग्राम गमयति' 'शिष्य शास्त्र ज्ञापयति' 'ब्राह्मणमन्न भोजयति' 'यजमान मन्त्र पाठयति' 'घट

जनयति, नाशयती' त्यादौ णिच्प्रत्ययप्रकृतिभूतधात्वर्थकर्तृवाचकानादिपदोत्तरद्वितीयाया. मुख्यभाक्तसाधारण कर्तृत्वमेवार्थः । "गतिबुद्धि" इत्यादिसूत्रेण कर्तु. कर्मसंज्ञाविधानात् । गतिज्ञानोत्पत्त्यादिनिरूपित कर्तृत्व चाश्रयत्वमेव गत्याघस्वपोऽनुकूलक्रियानुकूलव्यापाररूपभोजन कण्ठताल्वाद्यभिघातरूपपाठनिरूपित च तदनुकूलकृतिमत्त्व नाशनिरूपित ञ्च प्रतियोगित्वम् । तस्य च निरूपकतासम्बन्धेन धात्वर्थे ऽन्वयः ।

नव्यमते च यत्राश्रयत्व कर्तृत्व तत्राधेयत्व द्वितीयार्थः । यत्रानुकूलकृतिमत्त्व तत्र कृतिजन्यत्व यत्र प्रतियोगित्व तत्रानुयोगित्वम्, तेषा चाश्रयतासम्बन्धेनैव धात्वर्थेन्वयः । गत्यर्थादिभ्यो ऽन्यत्र णिच्प्रत्ययप्रकृतिधात्वर्थ कर्तृवाचकपदात् न द्वितीया, तादृशकर्तुः कर्मतातिदेशाविषयत्वात् । तेन 'पाचयत्योदन सहायेने' त्यादय एव प्रयोगाः, न तु 'पाचयत्योदनः सहाय' मित्यादय· ।

के चित्तु = पाकादिकर्तु पाकादिकर्मत्वविरहे ऽपि ण्यन्तसमुदायस्यापि धातुत्वेन तत्कर्मतया सहायादे· पाचयत्योदनं सहायमित्यादय. प्रयोगा अपि साधवः । अत एव "अजिमहत्त जनको धनुस्तत्" इत्यादयो भट्टिप्रयोगाः । "गतिबुद्धी" त्यादिसूत्र च नियमपरतया गत्यर्थधातुयोगे कर्तृप्रत्ययासाधुत्वज्ञापकम् । तेन 'पाचयत्योदन सहायेन' इत्यादिवत् 'अजया ग्राम यापयती' त्यादयो न प्रयोगा इत्याहुः ।

एषामयमाशय· = "हेतुमति चे" त्यनुशासनात् णिजर्थो हेतुकर्तृत्वम् ;, तच्च स्वतन्त्र कर्तृप्रेरणा, अन्यनिष्ठकर्तृत्वनिर्वाहकव्यापाररूपा, कर्तृत्व च क्वचित्प्रयत्नः क्व चिदाश्रयत्वादिकम्, यादृशधातूत्तराख्यातेन यादृशकर्तृत्व बोध्यते तद्धुत्तरणिच्प्रत्ययेन तादृशकर्तृत्वनिर्वाहकव्यापारो बोध्यते । अत एव 'पाचयती' त्यादौ पाकादिकृतिनिर्वाहकः, 'ज्ञापयती' त्यादौ ज्ञानाश्रयत्वनिर्वाहकः, 'नाशयती' त्यादौ नाशप्रतियोगित्वनिर्वाहको व्यापारः प्रतीयते । निर्वाहकत्व च स्वरूपसम्बन्धविशेषः, न तु जनकत्वम् । अतो न 'नाशयती' त्यादावन्वयानुपपत्तिः । एव च ण्यन्तधातुप्रतिपाद्यतावच्छेदक पर कर्तृत्वमेव, निर्वाहकस्यैव फलत्वात्, तदाश्रयतया अस्वतन्त्र-

स्य कर्तृ कर्मता, तादृशफलविशेषणतया अस्वतन्त्रकर्तृवृत्तित्वविवक्षाया पाचयत्योदनं सहायमित्यादयः प्रयोगाः। यदा ▪ पाकादिविशेषणतया सहायादिकर्तृत्वं विवक्षितम्, तदा 'पाचयत्योदनं सहायेने' त्यादयः।

अथ यत्र चैत्रमैत्रोभयकर्तृक एक एव पाकस्तत्र चैत्रमात्रं प्रयोजयति यज्ञदत्तो मैत्रेणान्नं पाचयतीति प्रयोगापत्तिरिति, तत्रापि ण्यर्थं इतावेव तृतीयान्तार्थमैत्रादिवृत्तित्वस्यान्वयो वाच्यः। एवं च मैत्र पाचयतीत्यादिवाक्यजन्यबोधवैलक्षण्याद् द्वितीयातृतीययोस्तात्पर्यभेदेन व्यवस्था या न सङ्गतिरिति चेन्न, अगत्या तत्र पाकादिविशेषणकृते पारतन्त्र्येण व्यापारविशेषणीभूतणिजर्थकृतावभेदान्वयमुपगम्योक्तातिप्रसङ्गस्य वारणीयत्वात्। पदार्थैकदेशे कृतौ पाकादेरिव कृतेरप्यन्वयो व्युत्पत्तिवैचित्र्यात्।

वस्तुतः कर्तृत्वं व्यापारश्च पृथगेव णिजर्थः। विशिष्टलाभोऽन्वयबलात्। केचित्तु, अनुकूलव्यापार एव णिजर्थः, तदन्वयिनी गमनज्ञानभोजनादिक्रियैव धात्वर्थतावच्छेदकं फलम्, तत्सम्बन्धिनस्तादृशक्रियावत्त्वं कर्मता, तादृशक्रियासम्बन्धश्चाश्रयत्ववृत्तिमत्त्वाद्यन्यतमो ग्राह्यः। अतो गमनादिसम्बन्धिनात्मादौ नातिप्रसङ्ग इत्याहुः। अत्र च तादृशकर्मतावाचकपदात् कदाचिद् द्वितीया कदाचित् तृतीया इत्यत्र नियामकाभावः। तादृशपदोत्तरयोस्तयोस्तुल्यार्थकतया विवक्षाभेदरूपनियामकाभावादिति तु चिन्तनीयम्।

'अजा ग्रामं याप्यते चैत्रेणे' त्यादौ चैत्रकर्तृकव्यापारनिर्वाह्यवद्ग्रामवृत्तिसंयोगानुकूलक्रियाकर्तृत्वं तदाश्रयः अजा इति बोधः। तत्र संयोगावच्छिन्नक्रिया धातुलभ्या, सयोगे ग्राममित्यादिद्वितीयार्थग्रामादिवृत्तित्वान्वयबलात् ग्रामादिवृत्तिसंयोगावच्छिन्नक्रिया लभ्यते। तादृश्या णिजर्थकर्तृत्वेऽन्वयः। कर्माख्यातादिसमभिव्याहारनियन्त्रितव्युत्पत्तिबलाच्च तादृशक्रियान्वितकर्तृत्वं तृतीयार्थचैत्रादिकर्तृत्वविशेषितव्यापाररूपापरणिजर्थेन निर्वाह्यत्वसम्बन्धेन विशेषितम्। अजादिरूपकर्मीभूते कर्तरि तद्विशेषणीभूतदाख्यातार्थाश्रयत्वे विशेषणतया भासते। ये तु 'गतिबुद्धि' त्यादि

सूत्रस्य सज्ञाविधायकत्व वर्णयन्ति, तेषाममयमादाय — व्यापार एव णिजर्थ, तत्र धात्वर्थक्रियाया. स्वकर्तृत्वनिर्वाहकत्व ससर्ग । अतो न कर्तु कर्मत्व सूत्रान्तरप्राप्तम् । 'याप्यते ग्राममजा' इत्यादौ ■ स्वनिर्वाहकर्तृतानिरूपकत्व-सम्बन्धेन व्यापारविशेषितो धात्वर्थ. कर्तृत्वे ऽन्वेति । तच्चाश्रयत्वसम्बन्धेन अजादौ विशेषणतया भासते । तादृशव्यापार तृतीयान्तार्थस्य चैत्रादिक-र्तृत्वस्य धात्वर्थैकदेशे सयोगादिरूपफले च द्वितीयान्तार्थस्य ग्रामवृत्तित्वस्य विशेषणतया भानम् । ण्यन्तोत्तराख्यातस्यापि कर्तृत्वमेवार्थ । तत्र च तस्य वृत्ति. क्लृप्तैव । तच्च उक्तस्य धात्वर्थस्य विशेष्यतया प्रथमान्तपदार्थस्य च विशेषणतया भासते ।

न च यकसमभिव्याहृताख्यातोपस्थाप्यकर्तृत्वस्यान्वयबोधोपगमे 'गम्यते चैत्र' इत्यतो ऽपि 'गमनकर्ता चैत्र' इत्यन्वयबोध. स्यादिति वाच्यम्, ण्यन्तोत्तरयकसमभिव्याहृताख्यातस्यैव कर्तृत्वान्वयबोधनियामकत्वात् ।

अथैवमपि 'अजा याप्यते' इत्यादौ कर्तृत्वस्याख्यातबोध्यत्वे "कर्तरिश" मित्यपवादविषयतया यको ऽसाधुतापत्ति । न च यादृशधातूत्तर सार्वधातुक विहित तादृशधात्वर्थनिरूपितकर्तृत्वस्य तेन विवक्षायामेव "कर्तरि शपि" त्यादः शबादिविधायकत्वात्, प्रकृते ण्यन्तसमुदायस्य उत्तरमेवाख्यातम्, तेन तदर्थ निरूपितकर्तृत्व च न बोध्यते, अपि तु ण्यर्थविशेषितधात्वर्थान्वितकर्तृत्व मेवेति न तादृशापवादविषयतेति वाच्यम्, कर्माख्यातस्थले विशेष्य-विशेषणभाववैपरीत्येन व्यापारविशेषितक्रियाया अपि ण्यन्तधात्वर्थत्वात् —

भैवम् । लकारसामान्यवृत्त्या यत्र कर्तृत्व प्रतीयते तत्रैव "कर्तरि शप्" इत्यस्य शब्विधायकता, अत्र कर्मत्वसमशीले कर्तृत्वे आत्मनेपदत्वेन शक्ति । वस्तुत फलव्यापारयो पृथक् धात्वर्थतामते गच्छतीत्यादाविव 'गम्यते' इत्यादावपि लकारेणाश्रयत्वरूपकर्तृत्वाभिधान यत् अनुपपन्न इति परस्मै पदसमभिव्याहृतधातुना यादृशविशिष्टो ऽर्थ. प्रत्याय्यते, तादृशविशिष्टार्थो-न्वितकर्तृत्वाभिधानमेव शब्विषय, एव च प्रकृते ऽपि नानुपपत्तिरिति ध्येयम् ।

'ग्रामो याप्यते, अर्थो बोध्यते' इत्यादौ भावनाविशेष्यतया ग्रामादेर्भाने ऽपि गमनादिकर्तुं कर्मत्वविवक्षाया तस्यैवाख्यातार्थविशेष्यतया बोधो व्युत्पन्न –"ण्यन्ते कर्तुश्च कर्मण" इत्यनुशासनात्, अतो 'ऽजा ग्रामो याप्यते' 'शिष्यमर्थो बोध्यते' इत्यादयो न प्रयोगा । 'ग्रामो याप्यते, अर्थो बोध्यते' इत्यादौ फल विषयत्वादिरूप च मुख्यभाक्तसाधारण कर्मत्वमेवाख्यातार्थ ।

फलव्यापारयो पृथक्धात्वर्थतामते आश्रयत्वमेवाख्यातार्थ । धात्वर्थव्यापारविशेष्यतया तादृशाश्रयत्वविशेषणतया च धात्वर्थफलस्य भानम्, ण्यर्थ व्यापारस्य जन्यतासम्बन्धेनैव धात्वर्थक्रियाजनानादिविशेषणत्व पूर्ववदेव । 'अजा ग्रामो याप्यते' इत्यादिकस्तु न प्रयोग, द्वितीयया कर्मत्वबोधने धात्वर्थव्यापार विशेष्यतया ण्यर्थबोधमागम्या॰ प्रयोजकत्वात्, यगादिसमभिव्याहारस्थले च धात्वर्थविशेषणतयैव ण्यर्थस्य बोधात्, ण्यन्तधातो सकर्मकत्वेन तदुत्तर-भावाख्यातस्य "भावे चाकर्मकेभ्य" इत्यनुशासनेनासाधुत्वाच्च न तादृशप्रयोग । ग्रामो याप्यते इति भावाख्यातप्रयोगस्त्विष्ट एव। ण्यन्तस्य कर्मासमभिव्याहारात् । एकदा कर्तृत्वकर्मत्वबोधकताया आख्यातस्याव्युत्पन्नतया 'अजा ग्रामो याप्यते' इत्यादयो न प्रयोगा । एवम् तण्डुल सहायेन पाच्यते चैत्रेणेत्यादौ धात्वर्थे सहायादिकर्तृकत्वस्य तादृशोपणण्यर्थव्यापारे विशेषणतया च चैत्रादि कर्तृकत्वस्य तृतीयान्तार्थस्य बोध । शेष पूर्ववदिति दिक ।

*ग्राम गच्छतीतिवत् स्व गच्छतीति प्रयोगवारणाय परसमवेतत्वमपि* द्वितीयार्थे इष्यते । तस्य च धात्वर्थे ऽन्वय. । परत्वे चैकदेशे ऽपि आकाङ्क्षावैचित्र्यात् प्रकृत्यर्थस्य प्रतियोगितयान्वय । एव च 'ग्राम गच्छति चैत्र' इत्यादौ *ग्रामभिन्नसमवेता ग्रामनिष्ठसंयोगजनिका या क्रिया* तदाश्रयतावाश्चैत्र इत्यन्वयबोध । स्वनिष्ठसंयोगजनकक्रियाया स्वभिन्नसमवेतत्वस्य बाधात् स्वमात्मान गच्छतीति न प्रयोग । यत्र चोभयकर्मण्या *मल्लयोः संयोगस्तत्र मल्लान्तरसमवेतक्रियाया स्वनिष्ठसंयोगजनिकाया स्व* भिन्नसमवेतत्वे ऽपि तादृशक्रियाश्रयताया स्वस्मिन् बाधात् मल्ल स्व गच्छतीति न प्रयोग॰ । न च स्वनिष्ठसंयोगजनकस्वसमवेतक्रियाया स्वभिन्नसमवेतत्वस्या-*योग्यतया* तदभानेप्यबाधित स्वनिष्ठसंयोगजनकत्व विषयीकृत्य शाब्दबोध सम्भवात् तदर्थमात्रतात्पर्येण स्व गच्छतीति प्रयोगो दुर्वार एवेति

वाच्यम् ; परसमवेतत्वांशाविषयकस्य द्वितीयाधीनफलजनकत्वबोधस्य कुत्राप्यनभ्युपगमेन तादृशबोधे तद्भासकसामग्र्या अप्यपेक्षणीयत्वात् ।

अथ स्वस्यापि द्वित्वावच्छिन्नस्वभेदवत्त्वात् स्व गच्छतीति प्रयोगस्य दुर्वारतया द्वितीयाप्रकृत्यर्थस्य प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनैव भेदे ऽन्वयो वाच्य । तथा च चैत्रो द्रव्यं गच्छति, मल्लो मल्लं गच्छति, इत्यादिवाक्यस्याप्रमाणतापत्ति । चैत्रमल्लादिनिष्ठक्रियाया प्रकृत्यर्थतावच्छेदकीभूतद्रव्यत्वमल्लत्वाद्यवच्छिन्नभिन्नासमवेतत्वात् । तत्तद्व्यक्तित्वानुपस्थितावपि शाब्दबोधोदयेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितासम्बन्धेनान्वये प्रमाणासम्भवात्, उक्तयुक्त्या सम्बन्धघटकोपस्थितेरपि शाब्दबोधे ऽपेक्षितत्वात्, एकधर्मावच्छिन्न प्रतियोगिताया अन्यधर्मावच्छिन्नसंसर्गत्वे मानाभावाच्च, प्रतियोगिविशेषिताभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वनियमात् अन्वयितानवच्छेदकावच्छिन्नप्रतियोगिताया. सम्बन्धत्वासम्भवाच्चेति चेत्तर्हि, क्रियान्वयिभेदप्रतियोगितावच्छेदकत्वमेव द्वितीयार्थो ऽस्तु । भेदे प्रकृत्यर्थस्याधेयता सम्बन्धेनान्वय इति न काचिदनुपपत्ति । न चैवमपि विहगो भूमिं प्रयातीतिवत् विहगो विहगं गच्छतीति प्रयोगो दुर्वार , विहगनिष्ठभूमिसंयोगजनकतत्क्रियाया विहगान्तरनिष्ठभेदप्रतियोगितावच्छेदकतया विहगे विहगनिष्ठप्रतियोगितावच्छेदकविहगवृत्तिसंयोगजनकक्रियाश्रयत्वस्याबाधितत्वादिति वाच्यम्, विहगो विहगं गच्छतीत्यादौ विहगादिप्रकृत्यर्थवृत्तित्वविशिष्टसंयोगस्य क्रियायां स्वजनकत्वस्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेनान्वयोपगमात्, विहगनिष्ठक्रियायास्तद्विहगनिष्ठसंयोगजनकत्वेन तज्जनकतासम्बन्धेन तत्संयोगवत्त्वे ऽपि विहगवृत्तित्वविशिष्टतत्संयोगाश्रयतद्विहगनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावात्तोभयसम्बन्धेन विशिष्टसंयोगवत्त्वमित्यनतिप्रसङ्गात् । एवं सति परसमवेतत्वं सम्बन्धघटकमेव न तु द्वितीयार्थ इति चेत् का क्षति ?। ' विहगो विहगेन गम्यते ' इत्यादावपि स्वाश्रयत्वस्वावच्छिन्नभेदसामानाधिकरण्योभयसम्बन्धेन क्रियाया संयोगे ऽन्वय इष्यते, तत्तत्क्रियावच्छिन्नभेदवति भूम्यादावेव तादृशभेदसामानाधिकरण्यसम्बन्धेन तत्तत्क्रियाविशिष्टसंयोगादिमत्त्वोपगमात्, तत्र तत्क्रियाश्रयविहगे तद्बाधेन नातिप्रसङ्ग इति ध्येयम् ।

ज्ञानादिरूपसविषयकवस्त्वभिधायकधातुसमभिव्याहृतद्वितीयायाः प्राची नमते निरूपकतासम्बन्धेन धात्वर्थान्वयि विषयत्वमर्थः । तत्र प्रकृत्यर्थ स्याधेयतासम्बन्धेनान्वयः । वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकतया 'घट जानाति, पट न' इत्यादावनुपपत्तेस्तत्र विषयित्वार्थकत्वमेव नवीना उपवर्णयन्ति । तत्रच प्रकृत्यर्थस्य निरूपितत्वसम्बन्धेन, तस्य च धात्वर्थे आश्रयतासम्बन्धेनान्वयः । घटादिनिष्ठ ज्ञानादिकर्मत्व च ज्ञानादिविषयित्वमेव । विषयित्वादौ च द्वितीयाया लक्षणैव न तु शक्तिरिति साम्प्रदायिकाः ।

वस्तुतस्तु विषयितात्वस्य संयोगत्वाद्यपेक्षया आधेयत्वाद्यपेक्षया चाऽगुरुतया किंधर्मावच्छिन्ने शक्तिः कल्प्यते इत्यत्र विनिगमक दुर्लभम् । एकस्मिन् न्योगभूयस्त्वमप्यशक्यनिर्णयमिति तत्रापि शक्ति- सिद्धय तीत्यवधेयम् ।

'चैत्रेण ज्ञायते घट' इत्यादौ कर्माख्यातस्थले आख्यातेन घटादौ धात्वर्थनिरूपितविषयत्वं बोध्यते । चाक्षुषत्वाद्यवच्छिन्नवाचकदृश्यादिसम भिव्याहृतद्वितीयाया लौकिकविषयित्वम्, तादृशकर्माख्यातस्य लौकिकविषयत्व मर्थः । उपनीतसौरभादिविषयकसुरभिचन्दनमित्याद्याकारकचाक्षुषादिदशायां 'सौरभ पश्यती' ति, 'सौरभ दृश्यते' इत्याद्यप्रयोगात् ।

अथैवम् 'पुष्प जिघ्रती' त्यादिप्रयोगानुपपत्तिः । घ्राणजप्रत्यक्षस्य पुष्पांशे लौकिकत्वविरहात् । तादृशधातुयोगे विषयित्वादिसामान्यस्य कर्मप्रत्ययार्थत्वे गन्धसाक्षात्कारे उपनयमर्यादयाकाशादिभाने 'आकाश जिघ्रती' ति प्रयोगप्रसङ्गेन तत्रापि लौकिकविषयिताया एव कर्मप्रत्य यार्थतयोपगन्तव्यत्वादिति चेन्न, घ्राधातोर्हि गन्धलौकिकप्रत्यक्षत्व शक्यतावच्छेदकम्, "घ्रा गन्धोपादाने" इत्यनुशासनात् । तत्समभिव्याहृतद्वितीयायाश्चाधेयत्वमेवार्थः, तस्य च व्युत्पत्तिवैचित्र्येण गन्धादिरूपधात्वर्थैकदेशेनान्वय । एव च 'पुष्प जिघ्रती' त्यादितः पुष्पवृत्तिगन्धलौकिकप्रत्यक्षाश्रयतावानित्याकारक एव शाब्दबोधो न तु पुष्पनिरूपितलौकिकविषयिताशालिप्रत्यक्षाश्रय इत्याकारक इति नानुपपत्तिः । न चैव सविषयार्थबोधकधातु

समभिव्याहृतकर्मप्रत्ययस्य विषयितार्थकत्वनियमभङ्गप्रसङ्ग इति वाच्यम्; विषयानवच्छिन्नतादृशवस्त्वभिधायकधातुसमभिव्याहृतकर्मप्रत्ययस्यैव तदर्थकत्वनियमात् । अस्य च गन्धात्मकविषयावच्छिन्नप्रत्यक्षवाचकतया तादृशनियमस्याबाधितत्वात् । न च घ्राधातुसमभिव्याहृतद्वितीयाया गन्धान्विताधेयत्वार्थकत्वे 'आमोदमुपजिघ्रती' त्यादेरनुपपत्तिः, गन्धविशेषरूपामोदपदार्थाधेयत्वस्य गन्धे बाधादिति वाच्यम्; विषयावच्छिन्नप्रत्यक्षार्थकघ्राधातुसमभिव्याहृतद्वितीयाया एव आधेयतार्थकत्वनियमात्, तत्र विषयानवच्छिन्नस्यैव प्रत्यक्षविशेषस्य लक्षणया घ्राधात्वर्थतोपगमेन विषयिताया एव तदर्थत्वात् ।

वस्तुतस्तु 'पुष्पं जिघ्रती' त्यादौ समवायावच्छिन्नाधेयत्वसंसर्गावच्छिन्नविषयतानिरूपितप्रकारतैव द्वितीयार्थः, तस्याश्च गन्धनिरूपितलौकिकविषयिताशालिप्रत्यक्षात्मकधात्वर्थैकदेशे विषयिताया निरूपितत्वसम्बन्धेनान्वयः । तेन 'इदानीन्तनपुष्पे गन्ध' इत्यादिप्रत्ययस्याधेयतासंसर्गेण कालादिप्रकारकत्वे ऽपि तादृशप्रत्यक्षदशायां न 'कालं जिघ्रती' त्यादिप्रयोगः । तादृशज्ञानीयगन्धादिविषयिताया कालादिप्रकारतानिरूपितत्वविरहात् । अत एव "तदाननं मृत्सुरभि क्षितीश्वरो रहः समाघ्राय न तृप्तिमाययौ" "आघ्रातवान् गन्धवहं सुगन्ध" मित्यादौ उपाधिनिष्ठगन्धग्रहतात्पर्येणैव जिघ्रतेः प्रयोगात्, तादृशगन्धे च आननगन्धवहादिवृत्तित्वस्य बाधे ऽपि न क्षतिः । तादृशगन्धस्याननाद्यवृत्तित्वे ऽपि 'आनने गन्ध' इत्याकारकबोधीयगन्धविषयिताया आननादिप्रकारतानिरूपितत्वेन वाक्यार्थाबाधात् । वाय्वानीतचम्पकगन्धस्य यत्र वाय्वादिवृत्तित्वेनैव ग्रहः, तत्र 'चम्पकं जिघ्रती' त्यादिप्रयोगो नेष्यत एव ।

यत्तु आधेयतामात्रं द्वितीयार्थः, न तु समवायावच्छिन्नत्वविशेषितमाधेयत्वम् । तथा च मुखादिसंसृष्टमृत्तिकादिगन्धे परम्परासम्बन्धेन मुखादिवृत्तित्वस्य सत्त्वात् न तादृशस्थले ऽनुपपत्तिरिति — तदसत्; तथा सति 'कालं जिघ्रती' ति प्रयोगस्य दुर्वारत्वात् । 'पुष्पमाघ्रायते' इत्यादौ च निरूक्तप्रकारत्वमाख्यातार्थः । आश्रयतासम्बन्धेन पुष्पाद्य-

न्विते तस्मिन् धात्वर्थप्रत्यक्षस्य निरूपितत्वसम्बन्धेन तद्विशेषणतापन्नगन्धविषयितायाश्च तादृशसम्बन्धेनान्वय । एकधर्मिविशेषणतयोपस्थितस्य स्वातन्त्र्येणान्यविशेषणतयान्वयबुद्धेरेवाव्युत्पन्नत्वात् । अत्र च प्रत्यक्षपारतन्त्र्येणैव गन्धविषयिताया आख्यातार्थेऽन्वयेन व्युत्पत्तिविरोधविरहात् ।

अस्तु वा गन्धलौकिकविषयकप्रत्यक्षं च विद्याकाल्ल्रमेवं धातोरर्थ । कर्त्राख्यातादिसमभिव्याहारे गन्धविषयिताया प्रत्यक्षविशेषणतया कर्माख्यातसमभिव्याहारस्थले च प्रत्यक्षविशेष्यतयान्वय इति न कश्चिद्दोष । जिघ्रत्यर्थगन्धविषयिता ( निरूपितनिरुक्तप्रकारता ) निरूपकत्वमेव पुष्पादिनिष्ठ जिघ्रतिकर्मत्वमिति दिक् ।

अथ दृश्यादिसमभिव्याहृतद्वितीयाया लौकिकविषयितार्थकत्वे सौरभं न पश्यतीत्यादौ सौरभादिनिरूपितलौकिकविषयिताशालिचाक्षुषाद्यप्रसिद्धया 'आकाशं न पश्यती' त्यादौ चाकाशादिनिरूपितलौकिकविषयिताया एवाऽप्रसिद्धया तादृशविषयिताशालिचाक्षुषाश्रयत्वाद्यभावरूपवाक्यार्थाप्रसिद्धि । न च 'सौरभं न पश्यती' त्यादौ सौरभादिनिरूपितलौकिकविषयित्वाभाव चाक्षुषादौ प्रतीयते इति वाच्यम्, एवमप्याकाशादिनिरूपितलौकिकविषयिताऽप्रसिद्धया 'आकाशं न पश्यती' त्यादावप्रतीकारात् । न च लौकिकविषयिताया निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभाव प्रतीयते इति वाच्यम्, वृत्त्यनियामकसम्बन्धस्य संसर्गाभावप्रतियोगितानवच्छेदकतया तादृशाभावस्याप्रसिद्धे । एतेन निरूपकतासम्बन्धेन चाक्षुषादिनिष्ठलौकिकविषयिताया अभावस्तत्राकाशादौ प्रतीयते इत्यपि निरस्तम् । अन्वयबोधस्य प्रथमान्तार्थमुख्यविशेष्यकताया सर्वानुभवसिद्धाया भङ्गप्रसङ्गाच्च, चाक्षुषादिनिष्ठलौकिकविषयितात्वावच्छिन्नस्य पदाद्वाक्याच्चानुपस्थितत्वेन तदभावस्याकाशादौ भानासम्भवाच्च । भावान्वयबोधे च लौकिकविषयिताप्रकारेण चाक्षुषादेर्भानात् नाऽभावान्वयबोधे चाक्षुषप्रकारेण तस्या भानम् । अस्तु वा वृत्त्यनियामकोऽपि सम्बन्धोऽभावप्रतियोगितावच्छेदक, तथापि निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्य विषयिताविशेषनिष्ठाकाशाद्यभावस्य भानोपगमो न सम्भवति । तथा सति

'आकाशं पश्यति चैत्र' इत्याकारकवाक्यजन्ययोग्यताभ्रमदशायां 'आकाशं न पश्यति चैत्र' इत्यादिवाक्याच्छाब्दबोधप्रसङ्गात्। 'आकाशं पश्यति मैत्र' इत्यादिभ्रमदशायां 'आकाशं न पश्यति चैत्र' इत्यादिवाक्याच्छाब्दबोधस्य दुरपह्नवतया लौकिकविषयतात्वसामानाधिकरण्येनैव तादृशाभावबोधकत्वमुपगन्तव्यम्। तादृशबोधश्च लौकिकविषयतात्वसामानाधिकरण्यमात्रेणैवाकाशादिनिरूपितत्वावगाही दर्शितयोग्यताज्ञानाप्रतिबध्य एव। न च चैत्रीयचाक्षुषादिनिष्ठलौकिकविषयतात्वावच्छेदेनैव तदृशाभावो दर्शितवाक्येन प्रत्याय्यत इति चैत्रीयचाक्षुषादिनिष्ठलौकिकविषयितायां आकाशीयत्वाद्यवगाही 'चैत्र आकाशं पश्यती' ति वाक्यजन्यबोधः प्रतिबध्नात्येव तादृशवाक्यजन्यधियमिति वाच्यम्, तादृशविषयितात्वेन विषयितायां अनुपस्थितेस्तदवच्छेदेनाभावप्रत्यायनासम्भवात्, 'चैत्र आकाशं पश्यती' तिवाक्यजन्यबोधे चैत्रांशे दर्शनाश्रयत्वं विशेषणं दर्शनांशे लौकिकविषयिता विशेषणमितिरीत्यैव पदार्थानां भानात्, चैत्रीयचाक्षुषादिनिष्ठविषयितात्वं नाकाशादिदर्शितावच्छेदकम्, किन्तु शुद्धलौकिकविषयितात्वमेवेति तस्य शुद्धलौकिकविषयितात्वावच्छेदेनाकाशाद्यभावावगाहिज्ञानं प्रत्येव प्रतिबन्धकतया निरुक्तधर्मावच्छेदेनाकाशाद्यभावावगाहिज्ञानस्य तदप्रतिबध्यत्वाच्च। एतेन तत्राकाशादिपदस्याकाशादिनिरूपितत्वार्थकता (द्वितीयायाः ताद्दशो निरूपितत्वलौकिकविषयतात्वोभयार्थकता वा) स्वीकृत्य लौकिकविषयितायां माश्रयतासम्बन्धावच्छिन्नप्रतियोगिताकतदभावोपगमेनापि न निस्तारः। 'घट आकाशं न पश्यतीत्यादौ' नितरामेवाऽगतिः।

यत्तु नञर्थस्य द्विधा भानोपगमेन आकाशादिनिरूपितत्वाभाववल्लौकिकविषयताशालिचाक्षुषाश्रयत्वाभाववान् घट इत्याकारकस्तत्रान्वयबोध इति— तदपि न; 'चैत्रो घटं न पश्यति' 'मैत्र आकाशं न पश्यति' इत्यादिवाक्यजन्यशाब्दबोधादविलक्षणबोधस्य सर्वानुभवसिद्धस्य तादृशवाक्यादनुपपत्तेः। न हि तत्रापि तादृश एव शाब्दबोधः। तथा सति चैत्रो यदा घटादिकं न पश्यत्यपि तु पटादिकमेव, तदा घटाद्यनिरूपितलौकिकविषयताशालिचाक्षुषाश्रयत्वाभावस्य तत्र बाधात् 'चैत्रो घटं न पश्यती' ति प्रयोगा-

नुपपत्ते । यदा च भावमात्र पश्यति तदा भावानिरूपितलौकिकविषयता-शालिचाक्षुषाश्रयत्वाभावसत्त्वात् 'भाव न पश्यति चैत्र' इत्यादिप्रयोगापत्तेश्च । एव 'आकाश न पश्यति घट' इत्यादौ आकाशाद्यनिरूपितलौकिकविषयताशालिचाक्षुषाश्रयत्वाभावस्य वाक्यार्थत्वे यदाऽऽकाशाद्यतिरिक्तपदार्थविषयकचाक्षुषाश्रयत्वभ्रम घटादौ, तदा आकाशाद्यनिरूपितलौकिकविषयताशालिचाक्षुषाश्रयत्वनिश्चयरूपप्रतिबन्धकसत्त्वेन तादृशवाक्यज शाब्दबोधानुपपत्ति । यथा 'चैत्रो घट पश्यति' इत्यादिनिश्चयदशाया 'घट न पश्यति चैत्र' इत्यादिवाक्यजन्यशाब्दबोधोत्पादो ऽनुभवसिद्ध , तथैवोक्तभ्रमदशाया 'आकाश न पश्यति घट' इत्यादिवाक्यजन्यबोधोत्पादो ऽपि न तत्त्वापत्ति सम्भवति ।

यच्चालौकिकविषयताशून्यचाक्षुषत्वावच्छेदेनाकाशादिविषयकत्वघटादिवृत्तित्वोभयाभाव एव आकाश न पश्यतीतिवाक्यात्प्रतीयते, उपनीताकाशादिविषयकचाक्षुषे आकाशादिविषयकत्वघटादिवृत्तित्वोभयसत्त्वेन चैत्र आकाश न पश्यतीत्यादिप्रयोगानुपपत्ति । घटादौ तादृशचाक्षुषाश्रयत्वभ्रमदशाया घट आकाश न पश्यतीति वाक्याच्छाब्दबोधानुपपत्तिश्चेत्यलौकिकविषयताशून्यत्वेन चाक्षुषादिक विशेषितम् । आकाशविषयकचाक्षुषानुपनीतभानस्यापीतरांशे लौकिकत्वात् तादृशानुपपत्तितादवस्थ्यम् । अतो लौकिकत्वविशेषणमुपेक्षितम् । अत्रालौकिकविषयिताशून्यचाक्षुषत्वाद्यवच्छिन्नस्य घट आकाश न पश्यतीत्यादौ शक्त्या धात्वर्थत्वासम्भवे ऽपि प्रकृते तस्यैव लक्षणया धात्वर्थत्वमुपेयते, विषयितासामान्यमेव च द्वितीयार्थ । आश्रयत्व द्वित्व निरूपकत्व चाख्यातार्थ । आश्रयत्वे व्युत्पत्तिवैचित्र्यात् प्रथमान्तपदार्थघटादेस्तस्य निरूपकत्वे विशेषणतयान्वय । तादृशनिरूपकत्वद्वितीयार्थाकाशादिविषयकत्वयोश्च ( प्रकारतया ) द्वित्वान्वय , द्वित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन तादृशोभयस्य नञर्थाभावे तस्याश्चावच्छेदकनिरुक्तधर्मावच्छेदेन धात्वर्थे ऽन्वय । धात्वर्थस्य प्रकृते मुख्यविशेष्यतयैव भानम् ।

अथ वा स्वनिष्ठाभावप्रतियोगितानवच्छेदकत्वरूपव्याप्यकतासम्बन्धेन धात्वर्थस्य तादृशोभयाभावे ऽन्वय । तस्य चाख्यातार्थनिरूप

योगित्वं द्वितीयार्थ, निरुक्ताभावप्रतियोगिकत्वं विवचन धातोरर्थ । घटाद्यनुयोगिकत्वं न प्रथमान्तार्थ इत्यपि निरस्तमिति चेत्, अगत्या 'घट आनाय न पश्यती' त्यादिवाक्यानामप्रामाण्यमुपगन्तव्यमिति ॥

## ॥ इति द्वितीयाकारक प्रथमखण्डः ॥

अनुमित्यादर्थकधात्वर्थयोगे विधेयत्वं विधेयित्वं वा द्वितीयार्थ, तेन वह्न्यादिपक्षकानुमितिपरस्य 'वह्निमनुमिनोमी' त्यादिवाक्यस्य न प्रामाण्यम् । यदि च वह्निसाध्यकपर्वतपक्षकानुमितिपरस्य वह्निमत्त्वेन पर्वतमनुमिनोमीत्यादिवाक्यस्यापि प्रामाण्यं मन्यते तदा तादृश धात्वर्थयोगे उद्देश्यत्वमुद्देश्यित्वं वा द्वितीयार्थ तस्य च तृतीयान्तोपस्थाप्यसाध्यविधेयकत्वे निरूपिते ऽन्वय । अतो वह्निमत्त्वेनेत्यादसमभिव्याहारे तत्र पर्वतमनुमिनोमीत्यादयो न प्रयोगा । विधेयत्वार्थे तृतीयानुशासनविरहात् तृतीयान्तेन वह्न्यादिविधेयकत्वं कथमुपस्थापनीयमिति तु न शङ्क्यम्, वैशिष्ट्यरूपार्थे तृतीयानुशासनसत्त्वात् विधेयतादेरपि वैशिष्ट्यरूपत्वात् । अत एव 'रजतत्वेन शुक्तिं जानाती' त्यादौ ज्ञाने रजतत्वादिप्रकारकत्वस्य घटत्वेन वह्निर्नास्ती त्यादौ सोऽदृश्यते अभावे घटत्वावच्छिन्नप्रतियोगिताकत्वस्य तृतीयान्ततो बोधः । तृतीयान्तार्थरजतादिप्रकारकत्वादद्वितीयान्तार्थशुक्त्यादिविषयकत्वयो विशिष्टवैशिष्ट्यबोधमर्यादया ऽवच्छेद्यावच्छेदकभावभानम् 'रजतत्वेन शुक्तिं जानाती' त्यादौ नियतम्, केवलमेकत्र द्वयमिति रीत्या तदुभयबोधस्य तत्राव्युत्पन्नत्वात् । अत 'इमे रङ्गरजते' इत्यादिभ्रमापरस्य तादृशवाक्यस्य न प्रामाण्यम् ।

घटत्वावच्छिन्नवह्न्याद्यभावनिष्ठेन वह्न्यादिनिरूपितानुयोगिताविशेषरूप वह्न्याद्यभावत्वेन तदभावनिष्ठघटत्वावच्छिन्नप्रतियोगिताकत्वस्यावच्छेद्यावच्छेदकभाव स्वीक्रियते । घटत्वेन वह्निर्नास्तीत्यादौ च तद्बोधस्वीकारी त्यादऽवश्यत्वमिति घटत्वावच्छिन्नवह्न्याद्यभावस्य वह्नित्वावच्छिन्नघटाद्यभाव समनियतत्वेन तदभिन्नतया तत्र घटत्वावच्छिन्नप्रतियोगिताकत्वघटाद्यभावत्वसत्त्वे ऽपि तादृशाभावपरस्य 'घटत्वेन घटो नास्ति, वह्नित्वेन वह्नि

नास्ती' त्यादिवाक्यस्य न प्रामाण्यम् । उक्तस्थलेषु तृतीयान्तार्थस्य द्वितीयान्तार्थे ऽवच्छेद्यावच्छेदकभावसम्बन्धेनान्वय इत्यपि केचित्, तन्न, विभक्त्यर्थे विभक्त्यर्थान्वयस्याव्युत्पन्नत्वात् ।

न च 'रजतत्वेनेदं ज्ञायते' इत्यादौ आख्यातार्थविषयताया तृतीयान्तार्थप्रकारताया निरूपितत्वसम्बन्धेनान्वयानोपव्युत्पत्तिकल्पनमिति वाच्यम्, तत्र रजतत्वादिप्रकारकत्वविशिष्टधात्वर्थज्ञाननिरूपितत्वस्याख्यातार्थे भान स्वीकारेणैवातिप्रसङ्गभङ्गात् । न च 'तस्मात्पचति' 'तस्माच्चैनरथे' त्यादौ विभक्त्यर्थे कृतिसम्बन्धादौ हेतुविभक्त्यर्थान्वयदर्शनान्नास्त्युक्ताव्युत्पत्तिरिति वाच्यम्, हेतुविभक्त्यतिरिक्तविभक्त्यर्थस्यानन्वयनियमात् । न च रजतत्वेनेदं जानातीत्यादौ तृतीयायाः कारकविभक्तित्वाभावान्न तदर्थस्य क्रियायामन्वयसम्भव इत्यगत्या द्वितीयार्थ एव तदन्वय उपगन्तव्य इति वाच्यम्, मणिकारमते 'तस्माज्जानाती' त्यादौ ज्ञानादिरूपधात्वर्थ एव हेतुविभक्त्यर्थस्य 'तस्मात् स्थीयते' इत्यादौ च सर्वमत एव धात्वर्थस्थित्यादौ तस्यान्वयेन षष्ठ्यर्थसम्बन्धस्यापि "गुरुनिप्रतपस्सिद्धुर्गस्तानां प्रतिकुर्वीतभिषज् स्वभेषजे" इत्यादौ धात्वर्थे ऽन्वयेन कर्मत्वमभि यादृश रजतत्वेन जानाती त्यादौ धात्वर्थे तृतीयार्थान्वयस्यानभ्युपगन्तेन कारकविभक्तिभिन्नविभक्त्यर्थस्य क्रियायामनन्वय इत्यनियमात् ।

एवं घटे वा वह्निर्नास्तीत्यादौ प्रथमार्थो नानुयोगित्वम्, प्रथमायाः सत्त्वातिरिक्तार्थबोधकत्वनियमात् । अतो नञर्थाभावे संसर्ग एव तत् । तत्र च न तृतीयार्थान्वयसम्भवः । मम तु अनुयोगितासम्बन्धेन वह्न्यादिविशिष्टाभावे तृतीयार्थघटत्वावच्छिन्नप्रतियोगितानिरूपितत्वस्य मानादिविशिष्टवैशिष्ट्यबोधमर्यादया वह्न्यादिअनुयोगिकत्वस्थ[illegible]यस्यानुयोगितया सम्बद्धघटादेस्तादृशप्रतियोगिताकत्वेनावच्छेद्यावच्छेदकभावमानोपगमेन [illegible] स्यात् । अनुयोगिताया नञर्थतावच्छेदकत्वे तत्रैव वह्न्यादेः प्रतियोगिनोऽन्वयः । तन्मते तृतीयार्थघटत्वावच्छिन्नप्रतियोगिताया निरूपकत्वेनान्वयोऽपि यथायथमद्वारेण सम्यक् प्रतिभाति ।

रङ्गे ऽभेदेन रजतारोपस्थले 'रङ्गं रजतेन जानाती' त्यप्रयोगात् तादात्म्यभिन्नसम्बन्धावच्छिन्नप्रकारतैव तृतीयार्थः । तत्र च 'रङ्गं रजतं जानाती' ति प्रयोगात्तादात्म्यसम्बन्धावच्छिन्नप्रकारता कर्मत्वानुशिष्टद्वितीयादेरेवार्थः । तस्याश्च तादृशप्रकारताश्रयपदसमानविभक्तिकपदोपस्थाप्यविशेष्यताविशिष्टायामेव ज्ञानरूपक्रियायामन्वयः । तेन भेदारोपस्थले रङ्गं रजतत्वं जानातीतिवत् अभेदारोपस्थले रङ्गं रजतं जानातीति न प्रयोगः । उक्तस्थले च रङ्गरजताद्यो समानविभक्तिकपदोपस्थाप्ययोरभेदान्वये साकाङ्क्षत्वे ऽपि मायोग्यतया तादृशान्वयः ।

ननु-एवं सति रङ्गरजतादिपदयोः सामानाधिकरण्यानुपपत्तिरिति चेत्, का क्षतिः ? न चैवं रजतगतैकत्वबहुत्वाविवक्षाया 'रङ्गाणि रजतं जानाती' ति प्रयोगस्य, 'स्त्रियं पांसुलां जानाती' ति प्रयोगस्य च प्रसङ्गः । सामानाधिकरण्यस्यैव समानवचनलिङ्गकत्वनियतत्वादिति वाच्यम्, समानाधिकरणयोरिव यत्पदार्थविशेष्यकत्वविशिष्टे ऽभेदसम्बन्धावच्छिन्नयत्पदार्थप्रकारत्वस्यान्ययस्तयोरपि समानलिङ्गवचनकत्वनियमात् ।

पक्षधरमिश्रमतानुयायिनस्तु-'रङ्गं रजतं जानाती' त्यादौ सामानाधिकरण्यानुरोधात् रजतादिपदस्य रजताभेदज्ञानविषये लक्षणा । अत एव भ्रान्तिज्ञविशेषदर्शिना प्रयुक्तस्य लोहितवह्निं जानातीत्यादिवाक्यस्यापि प्रामाण्यनिर्वाहः । न ह्यसमासस्थल इव लोहितवह्न्योरभेदाविवक्षा, ज्ञानादौ लोहितादेः स्वातन्त्र्येणान्वयो वा सम्भवति, कर्मधारयस्य साधुतानुपपत्तेः । लोहितपदोत्तरं प्रकारताबोधकविभक्तेरभावात् । धात्वर्थे साक्षाद्यामार्थस्या भेदान्वये ऽव्युत्पत्तेः । द्वन्द्वस्थलवत्कर्मधारयोत्तरविभक्तेः पूर्वपदप्रकृतिकत्वाभावात् तस्याः पूर्वपदार्थान्वितप्रकारताबोधकत्वायोगात् । न च द्वन्द्वसमासएवासौ, अल्पाचो वह्निपदस्य पूर्वनिपातप्रसङ्गात् । समाहारपक्षे पुल्लिङ्गतायाः इतरेतरपक्षे च एकवचनस्यानुपपत्तेः । एतन्मते शुक्लो वह्निरित्यादिप्रमायाः लोहिताभेदारोपविषयवह्निविषयकत्वे ऽपि शुक्लो वह्निर्लोहित इति समूहालम्बनप्रमायाः लोहिताभेदावगाहित्वविषयवह्निविषयकत्वे

ऽपि च तद्भ्रमाया लोहितवह्निं लोहितं वह्निं वा जानातीति न प्रयोगः । तदृशापदोषस्याप्यविषयतायां धर्मितारतम्येण द्वितीयार्थविषयतायामभेद सम्बन्धेन विशेषणताया नियमोपगमात् । अथ वा लोहिताभेदविषयता निरूपितविषयतात्वस्य वह्न्यादेर्वाऽनावयिविषयितानिरूपकत्वं भासते । समूहालम्बनादौ च तादृशविषयतात्वस्यैव विषयितानिरूपकत्वमिति नातिप्रसङ्गः । विषयतात्वस्य निरूपकत्वमित्यस्य च विषयतावच्छिन्न निरूपकत्वमित्यर्थः । एतच्च विलक्षणं विषयितानिरूपकतावच्छेदकत्वम विषयस्यापि विषयत्वस्योपेयते, 'रक्तदण्डवा' नित्यादौ दण्डादिरूप प्रकाराशे ऽवच्छेरेणापि रक्तत्वादिप्रकारतानिरूपितविशेष्यत्वेन दण्डादि-प्रकारताया अवच्छेदावच्छेदकभाववदित्याहुः ।

तन्न शोभनम्, उपरीत्या विनैव लक्षणामुपपत्तौ तस्या अयुक्त त्वात् ।

ऽगत्योपगमात् । यथा प्रकृतिविकृतिभावस्थले वृक्षः पद्मनौका भवतीत्यादौ प्रकृतिभूतवृक्षादेर्विशेष्यतया भावनान्वयित्वात्, तद्गतसंख्याबोधकतया प्रकृतिवाचकपदसमानवचनत्वमाख्यातस्य तथा 'एको द्वौ ज्ञायते' इत्याद्युभयाभेदान्वयस्थलीयवाक्ये एकादिपदार्थस्यापि विशेष्यस्याख्यातार्थान्वयितयाऽन्वयविशेष्यतया तत्पदसमानवचनत्वमाख्यातस्य ।

नचैवम् "जगाम तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम्" इत्यत्र कथमारोप्यविशेष्यवाचकपदविरुद्धवचनत्वमसमानमिति आख्यातपदस्येति वाच्यम्, तत्रायशोद्वयस्य वास्तवेन चिकुरभागद्वयस्य तत्र आरोप्यत्वेन कवेरुत्प्रेक्षितत्वात्, आख्यातार्थविशेष्यतान्वयविशेष्यत्वेन अयशोयुगस्यैव विवक्षितत्वात् ॥

इच्छार्थकधातुस्थले मुख्यविशेष्यत्वरूपं कर्मत्वं द्वितीयार्थः, अतो 'इष्टसाध्यं सुखं भवतु' इत्यादीच्छास्थले 'सुखमिच्छती' त्यादिवत् इष्टमिच्छतीत्यादयो न प्रयोगाः ।

अथ 'अहं सुखी स्या' मित्यादीच्छायां सुखादिविशेषणकतया तत्र सुखमिच्छतीत्यादिप्रयोगानुपपत्तिरिति चेन्न, 'मम सुखं भवत्वि' त्यादिसुखविशेष्यकेच्छाया एव कदाचित्सुखादिविशिष्टत्वबोधकशब्देन विषयाभिलापात् । स्वकृत्यधीनसिद्धिकत्वरूपस्वकृतिसाध्यत्वप्रकारकपाकविशेष्यकेच्छाया एव पाकं कृत्वा साधयामीति पाकसिद्ध्यनुकूलकृत्यभिन्नव्यापारविशिष्टत्वबोधकशब्देन विषयाभिलापवत् । यदि चोद्देश्यसुखादेर्विशेषणतयापि कचिद्भानमानुभविकम् ? तदोद्देश्यादिव्यवहारनियामकः कश्चित्कविशेषणसाधारणो विषयताविशेषोऽभ्युपेयः । अनुमितौ विशेष्यतया भासमानविषयसाध्यनिष्ठविधेयताख्यविषयतावत् । स एव च सुखमिच्छतीत्यादौ द्वितीयार्थः । 'ग्राममिच्छती' त्यादौ ग्रामादिपदं ग्रामस्वत्वादिपरम्, अत एव च सिद्धस्य ग्रामादेर्मुख्यविशेष्यतायाः उपदर्शितविलक्षणविषयताया वा विरहेऽपि न क्षतिः । ग्रामादेः सिद्धत्वेऽपि स्वस्वत्वस्य सिद्धेश्वरस्य इच्छया प्राधान्येन कचिद्भानम्, अविशिष्टस्यासिद्धत्वात् । तेनैव च 'ग्राममिच्छती' त्यादिप्रयोग इत्यपि वदन्ति ।

'पाकं चिकीर्षति' इत्यादौ द्वितीयाया विशेष्यतारूपकर्मत्वार्थकतया कृतिप्रकारकपाकविशेष्यकेच्छा प्रतीयते । सा च 'पाकं कृत्या साधयामी'तीच्छा । अथ वा सनो धात्वर्थविशेष्यकेच्छावाचित्वात्कृतिविशेष्यकेच्छा चिकीर्षापदार्थः । सा च पाककृतिर्भवत्वितीच्छैव । प्रवर्तिका च सा भवतु मा वेत्यन्यदेतत् । पाकादेश्च कृतिकर्मत्वमेव द्वितीयया प्रत्याय्यते, न त्विच्छाया विषयत्वरूपं कर्मत्वम्, गृहस्थितीच्छामादाय गृहं तिष्ठासतीत्यादिप्रयोगापत्ते ।

युक्तं चैतत्—सनो धात्वर्थप्रकारकेच्छावाचित्वे ओदनभोजनेच्छादशायाम् 'ओदनं बुभुक्षते' इति प्रयोगो न स्यात् । तत्र भोजनस्याप्रकारत्वात् । न च कर्मतासम्बन्धेन भोजनप्रकारिका यदा ओदनविशेष्यकेच्छा तदैवैतादृशप्रयोग वा चेच्छा भोजनधर्मिकेष्टसाधनताज्ञानाद्धे जनविशिष्टौदनधर्मिकेष्टसाधनताज्ञानाद्वा । ओदनस्य सिद्धतादशायामपि विशिष्टधर्मिकेष्टसाधनताज्ञानाद्विशिष्टधर्मिकासिद्धत्वज्ञानसहिताद्विशिष्टेच्छासम्भवात् । यत्र भोजनसिद्धतादशायां भोजनोत्तरकालीनगमनस्यादिप्रकारिका भुक्तौदनजन्यपुष्टित्वादिप्रकारिका वा इच्छा तत्र बुभुक्षत इति प्रयोगस्य न प्रसङ्गः । मुख्यविशेष्यविशेषणतापन्नकर्मत्वादौ इच्छाप्रकारताया एव सन्प्रत्ययप्रकृत्यर्थे भानोपगमादिति वाच्यम्, भोजनं भवतु' इत्यादिभोजनविशेष्यकेच्छादशायामपि "बुभुक्षते" इति प्रयोगस्य सर्वसिद्धत्वेन धात्वर्थविशेष्यकेच्छाबोधकताया सन्प्रत्ययस्यावश्यमुपेयत्वात् । न च द्वयी व्युत्पत्तिरुपेयते, एकव्युत्पत्त्यैव निर्वाहे व्युत्पत्तिद्वयकल्पने गौरवात्, अत एव च स्थित्यादिगोचरेच्छाया गृहादिविशेष्यकत्वस्वीकारेऽपि सम्भवे ऽपि गृहं तिष्ठासतीत्यादौ न प्रयोगः । भोजनप्रकारकौदनविशेष्यकेच्छाविशेषदशायां बुभुक्षत इति प्रयोगस्य तु उद्देश्यतारूपविषयताया एव धात्वर्थे भानोपगमेन तत्र निर्वाहात् । न च धात्वर्थविशेष्यकेच्छायां सन्प्रत्ययार्थत्वे 'पाकं चिकीर्षति, ओदनं बुभुक्षते' इत्यादौ पाकौदनादेर्द्वितीयया कृतिभोजनादिकर्मत्वप्रत्यायना सम्भवे ऽपि 'पाकश्चिकीर्ष्यते, ओदनो बुभुक्ष्यते' इत्यादौ कर्माख्या-

येन तत्प्रत्यायनासम्भव , तत्प्रकृतिभूतसन्नतधात्वर्थकृतिमोजनेच्छाकर्मत्व स्यैव तत्प्रत्यायन योग्यत्वात् , प्रत्ययाना प्रकृत्यर्थान्वितस्वार्थबोधकत्वात् , इच्छाविषयत्वविशिष्टकृतिभोजनादेश्च प्रकृत्या प्रतिपादनादिति वाच्यम् , कर्तृप्रत्ययस्थले सन्प्रत्ययार्थेच्छाया धात्वर्थविशेष्यतया भाने ऽपि कर्मप्रत्ययस्थले तस्या धात्वर्थविशेषणतया भानोपगमात् ।

'चिकीर्ष्यते पाक' इत्यादौ इच्छाविशेषितकृत्यादेरेव सन्नन्तेन प्रतिपादनात्, तादृशकृत्यादिकर्मताया आत्मनपदादिना प्रत्यायनसम्भवात् । आख्यातादुपस्थितवर्तमानत्वादेश्च कृत्यादिविषयकेच्छा यत्र प्रकृत्यर्थ , यत्र वा इच्छा विषयकृतिस्तत्राभयत्रैवान्वय । प्रकृत्यर्थैकदेशे ऽपि नीलतरो घट इत्यादिस्थले नीलरूपादौ तरबाद्यर्थातिशयान्वयानुरोधात् । न चैव कर्मप्रत्ययस्थले ऽपि कृतिविशेषितेच्छा सना प्रत्याय्यताम्, विशेषणीभवन्ती कृतिरेव कर्मत्वेन अन्वीयताम्, मन्मते ' विशेषणीभूतेच्छाया वर्तमानत्वाद्यपराख्यातार्थान्वयनादिति वाच्यम्, एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणतयान्वयो ऽव्युत्पन्न इति प्रथमान्तार्थविशेषणकर्मत्वे इच्छाया विशेषणतयोपस्थितस्य धात्वर्थस्य विशेषणतयान्वयायोगात् । विशेष्यतया चान्वयस्या ऽप्रसक्तत्वात् । धात्वर्थविशेषणतया इच्छाभानेपि तस्या वर्तमानत्वादिविशेष्यतयैव भानेनोक्तव्युत्पत्तिविरोधविरहात् । एव धात्वर्थस्य इतरविशेषणतयोपस्थितस्य स्वातन्त्र्येण कर्मतानिरूपण समयुक्तमेव । प्रकृत्यर्थस्यैकदेश ऽपि प्रकृत्यर्थान्तर्गततया भासमानएव प्रत्ययार्थान्वयदर्शनात्, न तु स्वातन्त्र्येण भासमाने । इच्छारूपविशेष्यपारतन्त्र्येण कर्मत्वान्वयो ऽपि इच्छाया कर्मत्वानन्वये दुर्घट । विशेष्यान्वयिन्येव विशेषणस्य पारतन्त्र्येणान्वयस्य विशिष्टान्वयस्थले व्युत्पत्तिसिद्धत्वात् न तु विशेष्यानन्वयिनि ।

अथास्तु विषयतारूपकर्मत्वे 'चिकीर्ष्यते पाक' इत्यादाविच्छापारतन्त्र्येण कृतेश्चान्वय । उभयत्रैव पाकादेर्विषयत्वात् । स्थित्यादिकर्मत्वाप्रसिद्धया च 'गृह तिष्ठासते' इत्यादेरप्रसङ्गादिति चेत्, 'ओदनो बुभुक्ष्यते' इत्यादौ का गति ? तत्रेच्छाकर्मताया विषयतारूप-

त्वात् । भोजनादिकर्मतायाश्च तदन्यत्वात् । विशेष्यीभवदिच्छान्वयिनि कर्मत्वे भोजनाद्यन्वयायोग्यत्वेन विशिष्टान्वयासम्भवात् । वस्तुत पाकश्चिकीर्ष्यत इत्यत्राप्यगतिरेव । कृत्यविशेषणतया पाकनिष्ठेच्छाविषयताया कृतिविशेषणतया तन्निष्ठकृतिविषयताया भिन्नतया इच्छान्वयिनो विषयत्वरूपकर्मत्वस्य कृत्यन्वयायोग्यत्वात् । यदि च विशेष्यान्वयिन्यपेक्षितत्वेव तस्यास्तन्त्र्येण विशेषणान्वय इति न नियम, अपि तु तदन्वयितावच्छेदकावच्छिन्न एवेति, तथा च विषयतात्वावच्छिन्नस्य उभयान्वययोग्यतया न प्रकृते ऽन्वयानुपपत्ति । अत एवाऽरुणयेत्यादावारुण्यनिरूपितसाध्यताया गोनिरूपितसाध्यताभिन्नत्वे ऽपि न तृतीयार्थे विशिष्टान्वयानुपपत्ति । तत्र परम्परया विशेष्यान्वयिसोमक्रयव्यक्ते परम्परया विशेषणान्वयिव्यक्त्यभेदवत् प्रकृते ऽपि परम्परयोभयान्वयिकर्मत्वव्यक्त्यभेदो ऽक्षत एवेत्युच्यते । तदा 'भोजनकृतिर्भवतु पाकश्च भवतु' इति समूहालम्बनेच्छामादाय 'पाकश्चिकीर्ष्यते' इति प्रयोगस्य काल्पनीयकृतिविषयतामादाय दुर्वारत्वेन । विषयितासम्बन्धेनेच्छाविशेषणीभवत्कृतिव्यक्तिकर्मत्वस्यैव तदिच्छान्वयिनि कर्मण्यन्वयाभ्युपगमेऽतिप्रसङ्ग इति चेत्, तथापि तदिच्छाकाले 'पाक इदानीं न चिकीर्ष्यते' इति प्रयोगानुपपत्ति । अन्वयितावच्छेदककृतिविषयतात्वकृतिगोचरवर्तमानेच्छाविषयतात्वावच्छिन्नाभावयोस्तदा पक्षे ऽसत्त्वात् । न च वर्तमानत्वावच्छिन्नकृतिविषयत्वाभावावच्छिन्नाभाव एव तत्र प्रतीयते, स च पक्षे अबाधित इति वाच्यम्, यदाऽनीतेच्छाधीनपाककृतिरपि तत्र वर्तते, तदा तादृशाभावस्यापि तत्र बाधात् । पाककृतीच्छायामसत्यामपीच्छान्तरे ऽपि च तथा प्रयोगात् । इच्छाभावे ऽपि पाककृतीच्छाभावे तथा प्रयोगविरहात् कृतिविषयत्वाभावमात्रावगाहित्वस्य तत्राभ्युपगमासम्भवादिति कर्मप्रत्ययस्थले इच्छा धात्वर्थविशेषणमेव ।

इदन्तु तत्त्वम् । कर्मप्रत्ययस्थले ऽपि धात्वर्थविशेष्यतयैवेच्छा सन्प्रत्ययेन प्रत्याय्यते । तत्कर्मत्वमेव कर्माख्यातार्थं । तच्च धात्वर्थमेकदा ऽविशेषणम् । 'ओदनकर्मकभोजनं भवतु, पाकविषयकृतिर्भवतु' इत्याद्याकारे च पाकौदनादीनां तदिच्छाविषयत्वा, तत्कर्मत्वमक्षतम् ।

गृहस्थित्यादीच्छाया च गृहादे स्थित्याधारत्वादिनैव विषयत्वमिति न गृहादेस्थितासादिकर्मत्वम् । अत एव यदोदनव्यक्तिकर्मकभोजनमप्रसिद्धम्, अथ च भोजनकर्मतया तदिष्टम्, तत्र 'अयमादनो बुभुक्ष्यते' इत्यादेर्दर्शनादिविषयत्वेन गगनादिगोचरस्थले च गमन दिदृक्ष्यते इत्यादेश्च प्रयोगस्य नानुपपत्ति । न वा आदनादिरूपकर्ममात्रोपरागेण यत्र भोजनादीच्छा दैववशेन च तद्भोजनादिक नियादिकर्मकमपि तत्र विप बुभुक्ष्यते इत्यादय प्रयोगा । कर्तृप्रत्ययस्थले ऽपि च तादृशविषयताख्य कर्मत्वमेव इच्छाविशेषणतया भासत न तु धात्वर्थकर्मत्वम् । धात्वर्थावच्छेदेनतया तत्तत्पदार्थकर्मत्वविशिष्टभोजनादिनिरूपितविषयिताया नियमत इच्छाया भानोपगमेनाक्व रले विप बुभुक्षते चैत्र इत्यादिप्रयोगवारणे ऽपि गगन दिदृक्षते चैत्र इत्यादिप्रयोगस्य दुरुपपादत्वात् ।

इदन्तु बोध्यम् । सन्प्रतियार्थेच्छाया धात्वर्थकृतिभोजनादे केवल विषयतासम्बन्धेन न विशेषणत्वम् । तथा सति परकर्तृकृतिभोजनादिगोचरेच्छावति 'अयं चिकीर्षति, बुभुक्षत' इति प्रयोगप्रसङ्गात्, किन्तु विशेष्यतासमानकर्तृकत्वोभयसम्बन्धेनैव, उक्तातिप्रसङ्गवारणाय इच्छासमानकर्तृकत्वे सन्प्रत्ययवाच्यता स्वीक्रियते त्वित्यर्था तदनयोपगमो न साधीयान् । इच्छान्तरसमानकर्तृकत्वमादाय दर्शितस्थले ऽतिप्रसङ्गताद वस्थ्यात् । समानकर्तृकत्वस्य वाच्यत्वे तमदिच्छारूपस्वपदार्थानामननुगमनव्युत्पत्त्यनुपपत्ति । न च समानकर्तृकत्वस्य सम्बन्धत्वोपगमे तत्र शक्तिग्राहकानुशासनविरोध, यतो "धातो कर्मण समानकर्तृकादिच्छाया वे" ति सन्प्रत्ययविधायकसूत्र तत् समानकर्तृकत्वार्थकता न प्रतिपादयति । तस्य हीच्छाकर्मत्वेन तत्समानकर्तृकत्वेन च स्वार्थपराद्धातोरिच्छारूपार्थे सन् भवतीत्येवार्थ । इच्छाधात्वर्थयो संसर्गतया समानकर्तृकत्वविवक्षायामपि समानकर्तृकत्वोपरक्तार्थपरत्व धातोर्निर्वहतीति, इच्छामात्रे शक्तिग्राहकं तत्सूत्रमिति ॥

सुबन्तोत्तरेच्छार्थविहितक्यच्काम्यच तस्य धातोरिच्छार्थकतया सन्प्रत्य

यान्ताविशेषे ऽपि सन्नन्तधातुवन्न सकर्मकता। तदन्तर्गतप्रातिपदिकस्यैव इच्छा कर्मत्वेऽधिकृतयेच्छाया कर्माकाङ्क्षाविरहात्। न च "पुत्रीयति, पुत्रकाम्यती" त्यादौ क्यजादिप्रकृत्यर्थपुत्रादे क्रियात्वाभावेनाकर्मकत्वे ऽपि "आत्मनः पाकमिच्छति, पाकीयती" त्यादौ प्रकृत्यर्थपाकादे सकर्मकतया सन्नन्त समुदायवद् क्यजाद्यन्तपाकादिसमुदायस्य सकर्मकताया दुर्वारतया तण्डुल पाकीयतीत्यादिप्रयोगापत्तिरिति वाच्यम्, कृधातुसमानार्थकयतेरिव सन्नन्त समानार्थकस्य क्यजन्तादेरपि कर्मताबोधकसुसाकाङ्क्षत्वानुपगमेन तथा प्रयोगाप्रसङ्गात्। कृदन्तकर्मत्वविवक्षायां तु षष्ठ्या बाधाद् द्वितीयाया अप्रवृत्ति।

न च घात्वथयजप्रयोगे "कर्तृकर्मणो कृती" त्यस्य द्वितीया बाधकत्वे 'कंसकर्मकवधमाचष्टे, कंस घातयती' त्यत्र द्वितीया न स्यात्। कंसस्याख्यानकर्मत्वायोगेन वधकर्मतयैव तदुत्तर द्वितीयासमर्थनादिति वाच्यम्, कृदन्तोत्तर यत्राख्यानार्थे णिच, तत्र "प्रकृतिवच्च कारक" मित्यनेन कृदन्तकारकस्य ण्यन्तप्रकृतिप्रतिपाद्यक्रियाकारकतुल्यत्वातिदेशात् "राजान गमयति, सूर्यमुद्गमयती" त्यादौ ण्यन्तधातुयोगे यथा प्रकृत्यर्थक्रियाकर्तृ कर्मत्व तथा कृदन्तोत्तरणिचप्रयोगे ऽतीत्याख्ययगत्युद्गत्यादिकर्तु कर्मतया तदुत्तर द्वितीयेति, ण्यन्तधातुयोगे यथा प्रकृते कर्मणो द्वितीयान्तता तथा णिच्प्रत्ययान्तकृदन्तकर्मणो ऽपीति लाभात् कृदन्तकर्मण कंसादेर्द्वितीयोप पत्ति। तथा विवक्षाया 'तण्डुलस्य पाकीयती' ति प्रयोग इष्यत एव। कारकविभक्त्यर्थस्य कृत्प्रेकदेशेनान्वयस्य व्युत्पन्नत्वात्। सम्बन्धविवक्षाया च न तथा प्रयोग ॥

वस्तुत सन्नन्तविवक्षायामपि तथा प्रयोग इष्यत एव। न च तत्र कृत्प्रेकदेशेन षष्ठ्यर्थान्वये प्रतियोगिपदादन्यपदार्थकारकादपीति व्युत्पत्ति विरोध इति वाच्यम्, तादृग्व्युत्पत्तरभेदान्वयस्थल एव स्वीकारात्। कृत्प्रेक देशेन भेदान्वय बाधकाभावात्, अत एव "कृदस्य राजमातङ्गा" इत्यादिप्रयोगा नष्यत। इष्यते च 'पितु स्मरणम' इत्यादिप्रयोग।

न च कारकपदप्रतियोगिपदयोरभेदान्वयबोधनमप्यलमिति वाच्यम्, तन्निवेशस्य दृष्टान्तविषयोक्तत्वात् । यथा प्रतियोगिपदार्थस्य कुत्रापि अभेदान्वयो न भवति तथा कृत्येनदेशेनान्यपदार्थस्येत्यर्थं तात्पर्यादिति ध्येयम् ।

अभेदविवक्षायां 'पण्डितं पुत्रीयति, प्रवीरं पुत्रकाम्यती" त्यादिप्रयोगाभाववत् परपुत्रादिगाचरेच्छावति पुंसि 'पुत्रीयती' त्यादयो न प्रयोगाः । "सुप आत्मनः क्यच्" इत्यादिना इच्छाकर्तृसम्बन्धि यदिच्छाकर्म तद्बोधकसुबन्तात् क्यच्काम्यचोर्विधानात् । सम्बन्धित्वं च सम्बन्धित्वेन भातव्यम् । अन्यथा यस्येच्छा तस्य पुत्रो ऽसिद्धस्तस्यापि स्वीयत्वेन पुत्रेच्छादशायां 'पुत्रीयती' त्यादिप्रयोगस्य सर्वसिद्धस्यानुपपत्तेः । उक्तस्थले पुत्रीयतीत्यादिवाक्यस्य प्रामाण्यवारणाय च क्यजाद्यर्थेच्छायां पुत्रादेः विषयित्वमात्रं न सम्बन्धः, किन्तु स्वादेः भावधानसम्बन्धस्य प्रतियोगितया यो विषयस्तादृशपुरुषवृत्तित्वसहितमित्युपेयम् । स्वसम्बन्धस्य क्यजाद्यर्थवाच्यत्वे ऽप्युक्तसम्बन्धेनैवेच्छायां सुबन्तार्थस्यान्वय इति व्युत्पत्तिप्रदर्शनार्थैव सूत्रे 'आत्मनः' इत्युपात्तम् । 'आत्मनः' इति षष्ठ्यर्थसम्बन्धश्च न "धातोः कर्मणः" इत्यादिसूत्रानुवृत्तायामिच्छायामन्वेति, अन्यावर्तकत्वात् सूत्रार्थलाभाप्रयोजकत्वात्, अपितु सुप इत्यर्थे सुबन्तादित्यत्र । तथेच्छाकर्तृ सम्बन्धितयेच्छाविषयार्थकम् । एवं च "इच्छाकर्मणः सुबन्तादिच्छायकर्तुरिच्छायां" मिति वृत्तावपीच्छाकर्तुः सुबन्तादित्येव योजना कार्या । यथाश्रुते दर्शितानुपपत्तेरिति ध्येयम् ।

'भृत्यं पुत्रीयती' त्यादावाचारार्थविहितक्यजन्तस्य सकर्मकत्वं युज्यत एव । तथाहि — तमिवाचरतीत्यर्थे उपमानवाचिनः क्यच् विहितः, तमिवाचरतीत्यस्य तत्तुल्यं जानातीत्यर्थः । आचारपदस्य व्यवहारमूलज्ञानपरत्वात् । तुल्यतया ज्ञानं च क्यजर्थः । तच्च सकर्मकमेव । तत्र तुल्यत्वे प्रतियोगितया पुत्रादेरन्वयः, पुत्रादिपदमेव वा गौण्या पुत्रादितुल्यपरम् । ज्ञानमात्रं क्यजर्थः, तत्र च स्वाभेदावगाहित्वसम्बन्धेन पुत्रादितुल्यस्यान्वयः ।

इत्यर्थकधातुयोगे इष्टसाधनत्वादिज्ञानविशेष्यताप्रयोज्यसाध्यताख्यविषयताविशेष एव कर्मत्वं द्वितीयादेरर्थः न तु विषयतामात्रम् । यत्र घटं करोतीति प्रयुज्यते तत्र कपालं करोति कुलाल इत्याद्यप्रयोगात् ॥

अथैवम् 'काशान् कटं करोति, तूलं भस्म करोति' इत्यत्र काशकाष्ठादिपदोत्तरद्वितीयानुपपत्तिः तत्र ज्ञानविषयत्वविरहादिति चेत् ? उपादानीयविलक्षणविषयतापि द्वितीयार्थः । सा च प्रकृत्यर्थ तदीयस्वार्थ्यधर्मीयविषयताविशिष्टायामेव कृतौ गतिः । अत एव कटादिरूपकर्मान्तरासमभिव्याहारे काशान् करोतीत्यादयो न प्रयोगाः ।

अत्रैवमपि 'काष्ठं भस्म करोति, दुग्धं दधि करोति' इत्यादौ काष्ठदुग्धादेः कर्मत्वानुपपत्तिः । तस्य भस्मदध्याद्युपादानताविरहात्, काष्ठदुग्धादिनाशानन्तरमेव तदारम्भकपरमाणुभिर्भस्मदध्याद्यारम्भादुत्पत्त्याश्रयस्यैवोपादानत्वात्, विभिन्नकालीनयोश्चाधाराधेयभावविरहात्, कारणस्यैवोपादानत्वमिति नियमाच्च । न च परिणामवादसिद्धान्ते नैयायिकानां काष्ठादेर्भस्मादिरूपद्रव्यान्तरं कारणत्वमपि तु प्रतिबन्धकत्वमेव, द्रव्यवति द्रव्यान्तरानुत्पत्तेरिति चेन्न, कर्म हि त्रिविधं भवति — प्राप्यं प्रकृतिविकृती च । तत्र प्राप्यं कर्म क्रियाजन्यफलशालि गम्यादेर्ग्रामादि, ज्ञानादेर्विषयश्च क्रियानिष्पाद्यं यत्तद्विकृतिरूपम् । यथा पाकादेरोदनादि, यथा वा कृतेर्माल्यादि, कटादि च । प्रथमे तण्डुलादिरूपपूर्वद्रव्यविनाशेनौदनादेर्निर्वर्तनम् । द्वितीये पुष्पादिरूपपूर्वद्रव्यमविनाश्यैव सन्दर्भादिरूपविशेषनिष्पादनेन विशिष्टस्य माल्यादेर्निर्वर्तनम् । तृतीये च काशादिरूपपूर्वधर्मिणमविनाश्य तेनैव कटादिरूपधर्मिनिष्पादनम् । ईदृशं च कर्म प्रकृतेरसमभिव्याहारस्थले निर्वर्त्यमुच्यते । 'तण्डुलानोदनं पचति, कुसुमानि स्रजं करोति, काशान् कटं करोति' इत्यादौ प्रकृतिसमभिव्याहारस्थलेऽपि निर्वर्त्यते निष्पाद्यते यदिति व्युत्पत्त्या, यद्यप्योदनादेरपि निर्वर्त्यताऽस्ति, तथापि तद्व्यावृत्तमेव पारिभाषिकं निर्वर्त्यत्वम् ।

तदुक्तमभियुक्तैः —

"सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते" इति ।

यस्य—विकृतिकर्मणः, नाश्रीयते—न प्रयुज्यत इत्यर्थः । एवं च तत्र तत्रौदनादेर्विकार्यकर्मण्येवान्तर्भावः । तदुक्तम्—

"क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥
यदसज्जायते पूर्वं जन्मना यत्प्रकाश्यते ।
तन्निर्वर्त्यं विकार्यं तु कर्म द्वेधा व्यवस्थितम् ॥
प्रकृत्युच्छेदसम्भूतं किञ्चित्काष्ठादि भस्मवत् ।
किंचिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्" ॥ इति ॥

अत्र प्रकृतिरपि ग्राह्या, अन्यथा काष्ठसुवर्णादेस्तुरीयतापत्तेः । विकार्यपदेनैकव्युत्पत्त्या प्रकृतिविकृत्युभयाबोधने ऽपि उभयसाधारणरूपानाच्छिन्ने पारिभाषिकमेव विकार्यपदम् । प्रकृतिरूपं कर्म च क्रियया वस्त्वन्तरनिष्पत्त्या पूर्वभावविशिष्टस्य यस्यासत्त्वरूपो विकारो निर्वाह्यते तद्यथा पाकादेः तण्डुलादि, कृतेश्च पुष्पराशादि । तत्र प्रथमस्थले तण्डुलादिरूपधर्मिनाशादेव पूर्वभावविशिष्टतदसत्त्वमोदनादिरूपकर्मान्तरनिष्पादकम्, इतरत्र धर्मिणः काशकुसुमादेः सत्त्वे ऽपि कटसन्दर्भादविरहरूपपूर्वभावासत्त्वेन तद्विशिष्टस्यासत्त्वं कटसन्दर्भादिनिष्पादकक्रियातो निर्वहति । एवं च 'तण्डुलान्नोदनं पचती'त्यादौ प्रकृतिकर्मोत्तरद्वितीयाया नाशकत्वमर्थः, तण्डुलाद्यन्वितं नाशकत्वं च पाके ऽन्वेति । विकृतिकर्मोत्तरद्वितीयायाश्च उत्पादकत्वमर्थः । ओदनाद्यन्वितस्य तस्य नाशकत्वविशिष्टे पाके ऽन्वयः । नाशे चोत्पत्तेः प्रयोजकत्वमुद्देश्यतावच्छेदकविधेयभावमहिम्ना नियमतो भासते । अतः पाकस्य तण्डुलारम्भकसंयोगनाशजनकत्वेऽपि तन्नाशस्य द्रव्यान्तरोत्पत्तौ द्रव्यनाशेनान्यथासिद्धतया प्रयोजकत्वबाधेन 'संयोगमोदनं पचती'ति न प्रयोगः ।

वस्तुतस्तु निर्वर्त्यकर्मासमभिव्याहारस्थले 'संयोगं पचती'ति प्रयोगवारणाय संयोगनाशद्वारा नाशकत्वमेव द्वितीयार्थो वक्तव्य इति कृतं प्रयोज्यप्रयोजकभावबोधनेन ।

'तण्डुलमोदनं करोति, काष्ठं भस्म करोति, दुग्धं दधि करोति' इत्यादावपि प्रकृतिकर्मोत्तरद्वितीयया तन्नाशकत्वं कृतौ प्रत्याय्यते, विकृतिकर्मोत्तरद्वितीयया च विषयताविशेष उत्पादकत्वं वा मिलितमुभयं वा कृतौ बोध्यते । 'काष्ठान् कटं करोति, कुसुमानि मौक्तिकानि वा स्रजं करोति' इत्यादौ काष्ठादिपदोत्तरद्वितीया कृतौ विषयताविशेषमेव बोधयति । नाशानुच्छेदकतायास्तत्र बाधात् । कटमित्यादौ द्वितीयार्थः पूर्ववत् । स्रगादिपदार्थविन्यासविशेषविशिष्टकुसुमादेर्न कुसुमाद्युपादानकृतिविषयता, अपि तु विन्यासादिरूपविशेषणस्यैव, तस्यैव कृत्यधीनोत्पत्तिरिति स्रजमित्यादिद्वितीयान्तस्य विशिष्टसत्त्वनिर्वाहकत्वमर्थः । विशेषणोत्पादकस्यापि स्वरूपसम्बन्धविशेषरूपं विशिष्टसत्त्वनिर्वाहकत्वमक्षतमेव

'अग्निः श्यामं रक्तं करोति' इत्यादावचेतनकर्तृव्यापारबोधककरोतिसमभिव्याहृतश्यामादिपदोत्तरद्वितीयया अपि नोपादानताख्यविलक्षणविषयतार्थकत्वसम्भवः, अपि तु तादृशद्वितीयान्तेन श्यामरूपादिविशिष्टसत्त्वनिर्वाहकतारूपं विशिष्टोच्छेदकत्वं तादृशव्यापारे प्रत्याय्यते । 'घटं रक्तं करोति' इत्यादावपि घटादिपदस्य रक्तत्वविशिष्टघटादिलाक्षणिकतया विशिष्टघटादिसत्त्वनिर्वाहकत्वं प्रतीयते । प्रकृतिविकृतिभावस्थले कर्माख्यातेन प्रकृतेः कर्मत्वमेव प्रत्याय्यते, अत 'काष्ठानि भस्मराशिः क्रियन्ते' इत्यादावाख्यातार्थविशेष्यकाष्ठादिवाचकपदसमानवचनत्वमाख्यातस्य न तु निर्वर्त्यभस्मादिरूपविकारवाचकपदसमानवचनता ।

अथैवं निर्वर्त्यकर्मवाचकपदात्प्रथमा न स्यात् अपि तु द्वितीयैव, तत्कर्मताया लकारेणानभिधानात् । यत्तु—उभयकर्मत्वमेव लकारेणाभिधीयते, प्रधानाप्रधानकर्मसमभिव्याहृतनीवहादिदुहादिरूपद्विकर्मकोत्तरकर्मलकारस्यैव कर्मत्वद्वयानभिधायकत्वनियमात्, प्रकृते च कर्मद्वयस्यैव तुल्यत्वात् । विकृतेराख्यातार्थविशेष्यत्वे ऽपि आख्यातस्य न समानवचनत्वनियमः "गृह्णाति वाचकः सङ्ख्यां प्रकृतेर्विकृतेर्न हि" इत्यनुशासनसिद्धप्रकृतिविकृतिसमभिव्याहृतलकारीयविकारसङ्ख्याबोधकत्वाभावव्युत्पत्तिनिर्वाहः इत्युक्तस्थले न क्रियापदस्यैकवचनान्तता । तदर्थान्वितसङ्ख्याबोधकस्यैवाख्यातस्य तत्पद-

अजा नीयते ग्राम ' मित्यादौ दोहननयनादिक्रियाया क्षीरग्रामादिकर्मकत्वान-न्वयप्रसङ्ग इति वाच्यम् ; प्रकृतिविकृत्युभयकर्मकस्थले तथा व्युत्पत्तेः । यथोक्तातिप्रसङ्गवारणाय दर्शिता व्युत्पत्ति. कल्प्यते , तथा कर्तृत्वविशे-षणतयाऽभासमानायामेव क्रियाया तृतीयार्थकर्तृत्वान्वय इत्यपि व्युत्पत्तिः कल्प्या । अन्यथा प्रकृत्यर्थविशेष्यतया कर्तृत्वविवक्षया 'काष्ठ भस्मना भवती' ति प्रयोगस्य दुर्वारत्वात् । उत्पत्तिप्रयोजकनाशप्रतियोगित्वरूपविकार एव ' काष्ठ भस्म भवती ' त्यादौ धात्वर्थ । आधेयत्वरूप तत्कर्तृ-त्वमेव सम्बन्धमर्यादया भासते । ' काष्ठेन भस्मना भूयत ' इत्या दौ भस्माद्याधेयत्वनुत्पत्तौ काष्ठाधेयत्व च नाशप्रतियोगित्वे तृतीयोपस्थाप्य प्रकारतया भासते । कर्तृत्वविशेषणतया भासमानस्य निरुक्तभवनस्या न्तर्गतायामेवोत्पत्तौ भस्मादेराधेयत्व सम्बन्धतया भासत इति व्युत्पत्ते , काष्ठेन भस्म भूयत ' इत्यादयो न प्रयोगा । भावाख्यातस्य कर्तृत्वा-बोधकत्वात् । कर्मत्वान्तरविशेष्यतापन्नत्यादौ कर्मत्वस्य ससर्गतया भानमव्युत्पन्नमिति ' काष्ठ भस्मराशि करोती ' त्यादयो न प्रयोगा ॥

" अधिशीङ्स्थासा कर्म " त्यादिना यत्राधारस्य कर्मसज्ञा तत्रा धारत्वमाधेयत्व वा द्वितीयार्थ. । ' स्थलीमधिशेत ' इत्यादौ तादृशार्थे द्वितीयाया ' स्थल्या अधिशयिते ' त्यादौ कृद्योगे षष्ठ्याश्च साधुत्वार्थमव कर्मसज्ञाविधानात् । अथ कृञ्जधात्वर्थव्यापारान्तर धात्वर्थे ऽन्तर्भाव्य शयनादि-रूपफलावच्छिन्नव्यापारार्थकत्वोपसर्गशीङ्प्रभृतिधात्वर्थतावच्छेदकशयनादिरूपफ लाश्रयतयाऽऽधारस्य कर्मत्वोपपादनसम्भवात् तादृशसूत्राणा वैयर्थ्यमेव । अभ्यादद्युपसृष्टशीङ्प्रभृतीनामेव च तादृशार्थे निरूढलक्षणा, न त्वनुप-सृष्टानाम् , अतो न 'स्थली शेत ' इत्यादय स्वारसिकप्रयोगा इति चेन्न, धाती-र्मुख्यार्थपरत्वे ऽपि दर्शितप्रयोगनिर्वाहाय भगवता पाणिनिमुनिना तादृश-सूत्रप्रणयनात् । तदप्रणीतवता शर्ववर्मप्रभृतीना मुख्यार्थपराणा ' स्थल्या-मधिशेत ' इत्यादिप्रयोगाना साधुताया दुर्वारत्वाच्च ।

कालाध्वदेशानामकर्मकक्रियायोगे कैश्चित्कर्मप्रत्ययार्थं विभाषया कर्मत्व-मनुशिष्यते । अन्ये तु क्रियान्तरान्तर्भावेनोक्तरीत्या तत्र पाक्षिक कर्मप्रत्यय मुपपादयन्तस्तन्नानुशासति । उक्त च तै —

गत्वा सङ्ख्याया पदार्थान्तरत्वोपगमाच्च, सङ्ख्यादिरूपनानादिनादिनिष्ठानुगतविशत्वादे गुरुत्वात् । एवं 'मासमधीते चैत्र' इत्यादावधिकरणतैव द्वितीयार्थः । मासादिपदार्थतावच्छेदकदिनपर्याप्तत्रिंशत्त्वादेर्धर्मिविशेषणतापन्नस्य द्वितीयार्थाधिकरणताया चैत्रकर्तृकाध्ययनाधारतात्वादिव्याप्यधर्मावच्छिन्नस्वरूपसम्बन्धरूपमवच्छेदकत्वं संसर्गतया भासत इत्युपगमेन सामञ्जस्यात् । यत्किञ्चिद्देशमासं व्याप्य यत्राधीतम्, तत्राध्ययनाधारतानाम वच्छेदकतावच्छेदकाधारतात्वव्याप्यतमत्वादिरूपोक्तधर्मावच्छिन्नाऽनतिप्रसक्तेन तद्वृत्तित्रिंशत्त्वेनावच्छेदात् । न्यूनकालाध्ययनस्थले च अतिप्रसक्ततया तादृशस्य मासादयोगस्याप्रावच्छिन्नाधारतानवच्छेदकत्वाच्चाऽप्रसङ्गातिप्रसङ्गयोरनवकाशात् । मासादिपदप्रवृत्तिनिमित्तधर्मे नैत्राध्ययनाधारताया व्याप्यत्वस्य शब्दादलाभे ऽप्यर्थतल्लाभात् द्वितीयाया अत्यन्तसंयोगार्थपरत्वमिति नानुशासनविरोधः ।

न च 'भूतले घटः, भूतलं घटवत्' इत्यादिप्रत्ययबलादतिप्रसक्तोऽपि धर्म आधेयताधारतयोरवच्छेदक इति वाच्यम्, तादृशप्रत्यये ऽवच्छेदकत्वभानानुपगमात् । आधेयताया अतिप्रसक्तधर्मावच्छिन्नत्वे साध्यसामानाधिकरण्यावच्छेदकधर्मात्मकव्याप्तिः शरीरे मिश्रादीनां स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशस्य व्यभिचारिण्यपि व्याप्त्या न ह्यतिप्रसक्तमवच्छेदकमिति तदशलीयविचारमणिपरिष्कारविरोधादसम्भवदुक्तिकल्पनापत्तेः । आधारताया अतिप्रसक्तधर्मावच्छिन्नत्वे यद्धेतुधिकरणत्वं साध्याधिकरणतावच्छेदकमिति लक्षणव्याख्यायाने स्वरूपसम्बन्धरूपावच्छेदकत्वप्रवेशेन व्यभिचारिण्यतिव्याप्त्या ऽदूषयित्वा "निरवच्छिन्नकालावच्छिन्नवृत्तिकस्य" इत्यादिदूषणान्तरेण तत्परित्यज्य दीधितिकृतामनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविवक्षाया असङ्गतापत्तेः )

अस्तु वा ऽव्यासज्यवृत्तिधर्मस्यातिप्रसक्तस्यापि दर्शितप्रतीतिबलादाधाराधेयभावावच्छेदकत्वम्, व्यासज्यवृत्तेस्त्वतिप्रसक्तस्य तदवच्छेदकत्वमप्रसक्तम्, 'क्षितिजलोभयं गन्धवत्, लेहगन्धोभयं क्षितौ' इत्यप्रतीतेः ।

अथ वा, द्वितीयाद्यर्थे ऽध्ययनाधारत्वे तत्तन्मासादिरूपप्रकृत्यर्थविशेषणतापन्नतत्तन्मासत्वादिव्यक्तीनां व्यापकतासम्बन्धेन स्वपारतन्त्र्येण विशेषणत्वमुपेयते । तादृशं च व्यापकत्वं स्वसमानाधिकरणव्याप्यवृत्त्यभावप्रतियोगितावच्छेदकत्वसम्बन्धेन स्वावच्छिन्नस्य यो भेदस्तदाश्रयधर्मवत्त्वम्, तादृशधर्मश्च 'चैत्रो मासमधीत' इत्यादौ चैत्रीयाध्ययनाद्याधारतायां विशिष्यैव सम्बन्धे ऽन्तर्भावनीयम् । मासान्तरनिष्ठतादृशाभावप्रतियोगितावच्छेदकत्वस्य तादृशधर्मे सत्त्वे ऽपि तत्तन्मासत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकतादृशधर्मे उक्तसम्बन्धेन तत्तन्मासत्वाद्यवच्छिन्नस्य यो भेदस्तदाश्रयत्वमक्षतमेवेति यत्किञ्चिदेकमासादिमात्रव्यापकाध्ययनादिस्थले ऽपि तादृशप्रयोगनिर्वाहः । 'प्रतिमासमधीत' इत्यादौ प्रत्यादिशब्देन मासादिपदोपस्थाप्यानुगतरूपावच्छिन्नमासत्वादिसमनिष्ठाभावप्रतियोगितावच्छेदकत्वसामान्याभावघटितव्यापकताबोधकतया यत्किञ्चिदेकमासव्यापकाध्ययनादिस्थले न तादृशः प्रयोगः ।

अथात्यन्तसंयोगार्थकद्वितीयाया एकादिपदं विनापि यत्किञ्चिदेकमासादिव्यापकताबोधकत्वे "उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुहोति" इत्यत्र एकपदवैयर्थ्यमिति चेन्न, तत्र मासाधिककालव्यापकत्वे ऽपि मासव्यापकतया ऽधिककालव्यापकस्य होमस्य शास्त्रार्थतावारणायैकपदोपादानात् । तथा सति तस्य केवलार्थकतया मासमात्रव्यापकतालाभात्तादृशप्रयोजनोपपत्तेः । अत एव च "यावज्जीवमग्निहोत्रं जुहोति" इति श्रुतिबोधिताग्निहोत्रानुवादेन सतिलव्रीहिचरुरूपद्रव्यस्य मासैकरूपकालस्य च विधाने वाक्यभेदः स्यादिति तादृशद्रव्यकालोभयविशिष्टस्य गौणाग्निहोत्रपदप्रतिपाद्यस्य कर्मान्तरस्यैव विधायिका तादृशी श्रुतिरिति सिद्धान्ते यावज्जीवकालान्तर्गतमासरूपकालादौ ऽप्यनुवादकतासम्भवात्प्राप्ताग्निहोत्रानुवादेन द्रव्यस्यैव विधानमुचितमिति पूर्वपक्षो निरस्तः । 'यावज्जीव' मित्यादिश्रुत्या यावज्जीवव्यापकत्वे बाधिते ऽर्थतो मासैकव्यापकतालाभे ऽपि उपसच्चरणकत्वविशिष्टहोमे तन्मात्रव्यापकताया अलाभेन तस्यापि विधेयतया वाक्यभेदस्य प्राप्ताग्निहोत्रानुवादेन द्रव्यविधिपक्षे दुर्वारत्वात् ।

अथ तादृशश्रुतेर्द्रव्यकालोभयविशिष्टस्य गौणाग्निहोत्रपदप्रतिपाद्यस्य वि-

धायकत्वे ऽपि न कथं वाक्यभेदः ? विधेयभेदस्यैतावताप्यपरिहारात् । प्रत्युत धर्मिणो ऽप्यधिकस्य विधानात् । एवं च "प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः । अप्राप्ते तु विधीयन्ते बहवो ऽप्येकयत्नतः" इत्यपि निर्युक्तिकमिति चेन्न, यत्र विधेयांशे युगपदनेकधर्माणां विशेषणतया भानं तत्र विधेयविशेषणभेदे ऽपि विशिष्टनिष्ठविधेयत्वाभेदेन वाक्यभेदविरहात् । अन्यथा 'भूतले नीलघटः' इत्यादावपि 'नीलं भूतलं घटवत्' इत्यादाविव वाक्यभेदप्रसङ्गात् । अनुवाद्यांशे विशेषणतया यत्रानेकेषां विधानं तत्र तेषां विधेयता भिन्नैवेति वाक्यभेदः ।

यद्यपि तत्तोपलक्ष्यककरणकहोमाधिकरणतात्वेन वा अधिकारिविशेषकृतताद्दशहोमाधिकरणतात्वेन वा मासैकव्यापकता मासन्यूनकालहोतृकृतहोमाधिकरणतायामप्यन्यान्यदिने पुरुषान्तरकर्तृकहोमाधिकरणतासत्त्वेनाक्षतैव, तत्तत्पुरुषकर्तृकताद्दशहोमाधिकरणतात्वेन व्यापकतायाः श्रुतितात्पर्यविषयत्वे च विधेयानन्त्यम्; तथापि विभिन्नपुरुषकर्तृकहोमाधिकरणताद्वयावृत्तिताद्दशचरहोमाधिकरणतामात्रवृत्तिधर्मत्वेनानुगतीकृत्य तत्तत्पुरुषकर्तृकताद्दशचरहोमाधिकरणतात्वावच्छिन्नव्यापकताना संसर्गविधया विवक्षितत्वान्न दोषः । ताद्दशाधिकरणताद्वयावृत्तित्वं च, स्ववृत्तित्वस्वनिरूपकहोमकर्तृनिष्ठभेदप्रतियोगिकर्तृकहोमाधिकरणतावृत्तित्वोभयसम्बन्धेनाधिकरणताविशिष्टान्यत्वरूपमनुगतं बोध्यम् ।

'मासमधीते' इत्यादावपि चैत्रादिकर्तृकाध्ययनाधिकरणतात्वरूपव्यापकतावच्छेदकधर्मस्योक्तानुगतरूपेणैवानुगमः कार्यः । अतो 'मासमधीयानो दृष्टः' इत्यादौ विशिष्य चैत्रत्वाद्यनुपस्थितावपि नान्वयधीधानुपपत्तिः । अन्यत्स्वयमूहनीयम् ।

'दण्डं विना न घट उत्पद्यते, रासभं विनापि घट उत्पद्यते' इत्यादौ विनापदार्थो ऽभाववान् । तत्पदसमभिव्याहृतद्वितीयाया अभावान्वयिप्रतियोगित्वमनुयोगित्वं वाऽर्थः । अभाववत्त्वञ्चोत्पत्त्यावाधारत्वेनान्वयः । तथा च दण्डाभाववद्वृत्त्युत्पत्तिकत्वाभाववान् घटः, रासभाभाववद्वृत्त्युत्पत्तिको घट इत्याकारको बोधः । यद्यपि निपातार्थे

नामार्थस्य साक्षादपि भेदान्वयः तथापि सम्भवति सार्थकत्वे विभक्तेः निरर्थकत्वमनुचितमिति द्वितीयायाः सार्थकत्वमुपेयते ।

'भूतले न घटः, चन्द्र इव मुख' मित्यादौ प्रथमायाः प्रतियोगितासार्थकत्वे प्रथमैव न साधु स्यात् । प्रातिपदिकार्थान्वयिनोऽन्यपदेनाभिधानस्थल एव "प्रातिपदिकार्थे" त्यादिसूत्रेण प्रथमाविधानादिति तत्र प्रतियोगित्वादिः सम्बन्धविधयैव भासत इत्युपेयते । 'दण्ड विना न घटोत्पत्ति' रित्यादौ च विनान्तार्थे घटोत्पत्त्याद्यभावान्वये ऽनुयोगिविशेषणदण्डाद्यभावस्य च तदनुयोगिताव्च्छेदकत्व भासते । 'द्रव्ये न गन्ध' इत्यप्रयोगात् उपलक्षणीभूतधर्मावच्छिन्ने न नञर्थाभावान्वय इति व्युत्पत्तेरिति । 'रासभ विना न घटोत्पत्ति' रिति न प्रयोग, अतिप्रसक्ततया रासभाभावस्य घटोत्पत्त्याद्यभावानुयोगितावच्छेदकताविरहात् ।

अथ वा अभाव एव विनार्थः । 'दण्ड विना न घट' इत्यादौ च विनान्तार्थस्याभावस्य नञर्थे घटाद्यभावे प्रयोज्यतासम्बन्धेनैवान्वयः । अत एव 'रासभ विना न घट' इत्यादयो न प्रयोगा । अत एव दण्डाद्यभाववति घटादेर्वृत्तावपि 'जायते' इत्यस्याध्याहार विनैव 'दण्ड विना न घट' इति प्रयोगोपपत्तिः । 'रासभ विना घट' इत्यादौ च विनार्थस्याभावस्य सामानाधिकरण्यसम्बन्धेन घटादावन्वय । दीधितिकृतापि "अविनाभावो व्याप्ति" रित्यत्र "साध्य विना साध्याभाववति यो ऽभाव" इति यद्व्याख्यात तत्र सप्तम्यन्तेन मतुपा ससर्गविधया भासमान तदधिकरणनिष्ठत्वमेवोपात्तम्, न तु विनार्थत्वेनाधिकरणम् । अभावाधिकरणपर्यन्तस्य विनापदार्थत्वे ऽपि सप्तम्या आधेयत्वरूपापदार्थविवरणरूपताया आवश्यकत्वात् ।

न च विनापदोत्तरलुप्तसप्तम्यर्थ एवाऽभाववतीति सप्तम्या विवृत इति वाच्यम्, निपातोत्तरविभक्तेर्निरर्थकत्वात् । अत एव सर्वत्र निपातोत्तर साधुत्वार्थ प्रथमैवेति शाब्दिकाः ।

'पृथिव्यामेव गन्धः' इत्यादावेवकारप्रकृतिकसप्तम्या यदाधेयत्वबोधकत्वमङ्गीकृतं दीधितिकृद्भिस्तत्रापि तेषां न निर्भरः । अस्तु वा तत्र प्रतियोगितया पृथिव्यन्यवृत्तित्वभानानुरोधेनैवकारस्यान्यवृत्तित्वार्थकत्वं गौरवानुपेक्ष्य तत्राधेयत्ववाचकत्वेन क्लृप्तायाः सप्तम्याः कल्पनम् । प्रकृते चाधेयत्वस्य सप्तम्यैवोपपत्तौ विनापदसाकाङ्क्षाधेयत्वार्थकसप्तमीकल्पनं दुष्करमेव । एवकारस्थले चाभावरूप एवार्थेऽन्यरूपतदर्थान्तरस्याधेयतासम्बन्ध इति न सम्भवति, आधेयतादेस्तद्वत्येव सम्बन्धत्वात् न तु तदभावे । न च आधेयत्वाभावो न प्रतीयते, अपि तु तत्सम्बन्धावच्छिन्नप्रतियोगिताकपृथिव्यन्याभाव इत्युपेयम्, तादृशप्रतियोगिताकत्वमेवाऽभावेऽन्यस्य सम्बन्धो सिध्यति वाच्यम्; आधेयतासम्बन्धस्य प्रतियोगिनि आधारस्यानुयोगिन्याधेये वृत्त्यनियामकत्वेनाभावप्रतियोगितानवच्छेदकत्वात् । 'चैत्रः पचती'त्यादौ कृत्यादिसम्बन्धस्यापदार्थत्वेऽपि 'पाककृतिमा'नित्यादौ मतुबादिपदेन विवरणवत्, उक्तस्थले सामानाधिकरण्यस्य पदेन विवरणमपि न विरोधमापादयति, विवरणीयार्थस्याप्यन्यलभ्यत्वेऽपदार्थतोपपत्तेरित्यलमसदाग्रहेण ।

'विना वातं वृक्षः पतित' इत्यादौ विनापदार्थस्याभावस्याश्रयतासम्बन्धेन वृक्षेऽन्वयाद्वाताभावविशिष्टो वृक्षः पतित इति शब्दतो लभ्यते । पतनेऽनुभवसिद्धो वातजन्यत्वाभावलाभस्त्वार्थः, जन्यतायाः पदानुपस्थाप्यत्वात् । तदभावस्य तस्य वृत्त्यनियामकसम्बन्धत्वात्तदवच्छिन्नवाताभावस्य च शब्देन बोधयितुमशक्यत्वात् । 'पुत्रं विना गतः' इत्यादौ पुत्रादिपदं लक्षणया पुत्रगमनादिपरम् । विनापदबोध्यतदभावश्च समानकालीनत्वादिसम्बन्धेन गमनेऽन्वेति । समानकालीनत्वघटकं कालनिष्ठं स्वाधिकरणत्वमनवच्छिन्नं बोध्यम् । अतो गमनादिकाले तदनधिकरणदेशावच्छेदेन गमनाद्यभावसत्त्वेऽपि नातिप्रसङ्गः ।

केचित्तु — उक्तस्थले असाहित्यमेव विनापदार्थः । तस्य च गमनादिकर्त्रन्वयः । असाहित्यं च स्वकर्तृकसमभिव्याहृतगमनादिक्रियासमानकालीनतादृशक्रियाकर्तृत्वरूपसाहित्याभावः, क्रियान्वयिस्वकर्तृकतादृशक्रियाकालीन-

त्वाभाव एव वा विनार्थ । कर्तृत्वे पुत्रादेराधेयत्वेनान्वय । विभक्ति साधुत्वार्थैव । अस्तु वा आधेयत्व द्वितीयार्थ । सप्तम्या आधेयत्वार्थकत्वेऽपि न तत्र सप्तमीप्रसक्ति , तस्या कारकविभक्तित्वेन क्रियान्वयित्वार्थबोधकत्वात् । अत शेषषष्ठीप्रसक्त्या तामेवोपपदविभक्तिःद्वितीया बाधत इति " सर्वा उपपदविभक्तय षष्ठ्यपवादिका " इत्यस्याऽविरोध इति । विनासमानार्थकयो 'ऋते ऽतरेणे' ति निपातयोरपि दर्शितैव रीति । एव विनायुक्ततृतीयापञ्चमीस्थले ऽपि ।

मर्यादाभिविध्यर्थकयावच्छब्दयोगेपि द्वितीया दृश्यते , तत्र मर्यादार्थको यावच्छब्द —" आरभ्य तस्या दशमी तु यावत्प्रपूजयेत्पर्वतराजपुत्री " मित्यादौ । मर्यादा—सीमा, कालरूपा देशरूपा च । कालनिष्ठत्व च, तत्कालनिष्ठ समभिव्याहृतकालप्रागभावानधिकरणत्वप्रागभावाधिकरणत्वसजातीयावत्कालवृत्तिसमभिव्याहृतक्रियानधिकरणत्वम् । एवञ्चोक्तस्थले यावच्छब्देन पूजारूपक्रियाया शुक्लदशमीनिष्ठतादृशसीमात्वनिरूपकत्व प्रत्याय्यते । तावतैवार्थत शुक्लदशम्या मर्यादात्व लभ्यते । तन्निष्ठसीमात्वनिरूपकत्व च तद्वृत्तित्वे सति कृष्णनवमीप्रागभावानधिकरणशुक्लदशमीप्रागभावाधिकरणतिथिकूटव्यापकत्वम् । तावता षोडशतिथ्यधिकरणकषोडशपूजारूपस्यैककर्मणो विधेयतया लाभ । व्याप्यकालसमुदाये सजातीयत्वविशेषणा पूजायामुक्तविशेषणद्वयाक्रान्तदण्डादिसमुदायाव्यापकत्वेपि न बाध । अन्वयितावच्छेदकरूपेण साजात्यस्य विवक्षणादुक्तस्थले च तिथिमित्यस्याध्याहारेण दशमीपदार्थतावच्छेदकस्य तिथित्वघटितत्वेन वा यावत्पदार्थान्वयितावच्छेदकतया तिथित्वभानाद्येन रूपेण दण्डादेर्दशमीसजातीयत्वाभावात् ।

तिथिश्चाऽखण्डकालविशेषरूपा, न तु चन्द्रमण्डलकलारम्भाद्यनुगुणक्रियाप्रचयरूपा , पूजायास्तावत्क्रियावृत्तित्वासम्भवात् । अत्र च प्रागभाव एव यावत्पदार्थ । द्वितीयार्थ प्रतियोगित्वमनुयोगित्व वा । तत्र तत्प्रकृत्यर्थदशम्या अन्वय । तावता दशमीप्रतियोगिकप्रागभावलाभ । तस्य स्वप्रतियोगिवृत्तित्वविशिष्टव्यापकतासम्बन्धेन पूजारूपसमभिव्याहृतक्रिया-

यामन्वयं । व्यापकत्वं च स्वाधिकरणतिथिनिष्ठाभावप्रतियोगितानवच्छेदक पूजाविशेषत्ववत्त्वम् । स्वाधिकरणत्वं च, स्वाधिकरणकृष्णनवमीप्रागभावावच्छिन्नभेदविशिष्टकालिकविशेषणतासम्बन्धेन ।

एतेन कृष्णनवमीप्रागभावाधिकरणप्रतियोगिकभेदस्याव्यावर्तकतया सामान्यभेदानिवेशे भाविकृष्णनवमीप्रागभावाधिकरणत्वमादाय नाप्रसिद्धि तथा सत्यपि तत्तद्दशमीप्रागभावाधिकरणकालस्य स्वाधिकरणकृष्णनवमी प्रागभावावच्छिन्नभेदवत्त्वसम्बन्धेन तत्तत्प्रागभावाधिकरणत्वात्, न चैव मपि व्यवहितपूर्वकृष्णनवमीप्रागभावावच्छिन्नभेदघटितसम्बन्धेनाव्यवहितपूर्व कृष्णनवमीपूर्वतिथीनामपि तत्तद्दशमीप्रागभाववत्त्वात्तदधिकरणतिथिव्यापकत्व पूजाया न सम्भवतीति वाच्यम्, स्वावच्छिन्नकृष्णनवमीप्रागभावानधिकरण त्वसम्बन्धेन स्वावच्छिन्नभेदस्यैव प्रागभावसम्बन्धे निवेशनीयत्वात् । स्वाधिकरणनिष्ठाभावप्रतियोगितानवच्छेदकत्वमपि तादृशावच्छेदकत्वसम्बन्धेन स्वावच्छिन्नस्य भेद । अतस्तादृशावच्छेदकत्वत्वावच्छिन्नाभावनिवेशे यत्किञ्चिद्दशमीप्रागभावाधिकरणनिष्ठाभावप्रतियोगितावच्छेदकत्वमादायाप्रसिद्धिवारणाय विशिष्य तत्तत्प्रागभावरूपस्वपदार्थस्य सम्बन्धमध्ये प्रवेशयतोऽननुगम इति निरस्तम् ।

देशरूपा सीमा च, 'काशीत कौशिकीं यावद् याति' त्यादौ । तत्र कौशिक्या गमनसीमात्वं प्रतीयते । तच्च, काशीपूर्वकौशिकीपश्चिम देशव्यापकगमनानधिकरणत्वम् । यावत्पदेन च कौशिक्यनधिकरणत्वे सति काशीपूर्वकौशिकीपश्चिमदेशव्यापकत्वं गमने प्रत्याय्यते । तत्र द्वितीयार्थो ऽवधित्वमवधिमत्त्वं वा प्रतीत्यनुपपत्तेः । निष्कर्षः पूर्ववत्स्वयमूहनीयः ।

अभिविध्यर्थो यावच्छब्दः 'कार्तिकमारभ्य चैत्रं यावच्छीतं भवती' त्यादौ 'काशीत पाटलीपुत्रं यावद् वृष्टो देव' इत्यादौ चाभिविधिस्तत्पर्यन्ताभिव्याप्तिः । एवं च प्रथमे कार्तिकपूर्वकालोत्तरचैत्रोत्तरकालपूर्वकालव्यापकत्वं चैत्रोत्तरकालाऽवृत्तित्वसहितं शीतभवने, द्वितीये च काशीपश्चिमदेशापूर्वपाटलीपुत्रपूर्वदेशपश्चिमदेशव्यापकत्वं पाटलीपुत्रपूर्वदेशावृत्तित्वसहितं वृष्टौ

यावत्पदेन प्रत्याय्यते । विशेष पूर्ववत् । यावच्छब्दसमानार्थक आङ्शब्दस्थले ऽपि दर्शितैव रीतिरवसेया । तद्योगे च पञ्चमी साधु ।

'यशमनु प्रावर्ष' दित्यादावनुशब्दार्थ कारकत्वरूप हेतुत्वम् । "अनुर्लक्षणे" इत्यत्र कर्मप्रवचनीयसंज्ञाविधायकसूत्रे लक्षणपदस्य कारक हेतुपरत्वात् । तत्र च यशान्वितस्याधेयत्वरूपद्वितीयार्थस्यान्वयः । हेतुतायाश्च निरूपकत्वसम्बन्धेन वृष्ट्यन्वय । जन्यत्व वा अनुशब्दार्थ । तत्र निरूपितत्व रूपद्वितीयार्थस्य यशान्वितस्यान्वय । जन्यतायाश्चाऽऽश्रयत्वसम्बन्धेन वृष्ट्यन्वय. ।

"अन्वर्जुन योद्धार" इत्यत्रापकर्षरूप हीनत्वमनुशब्दार्थ । अर्जुनावधिकत्व द्वितीयान्तार्थ , तस्य चापकर्षे ऽन्वय । अवधित्वस्यापादानता रूपत्वे ऽपि क्रियान्वयाभावान्न पञ्चमीप्रसक्ति , "अस्मादय दीर्घ" इत्यादौ 'भवती' त्यस्याध्याहारेणैव पञ्चम्युपपादनात् । अत पञ्चम्यपवादत्वनिर्वाह ।

"वृक्ष प्रति विद्योतते विद्युत् , मातर प्रति साधु , यो मां प्रति स्यात् , वृक्ष वृक्ष प्रति सिञ्चती" त्यादौ "लक्षणेत्थ भूते" इत्यादिसूत्रानुशिष्टकर्मप्रवचनीयसंज्ञकप्रत्यादि शब्देषु प्रथमे परिचायकत्वरूप लक्षणत्व परिचेयत्व रूप लक्ष्यत्व वा कर्मप्रवचनीयार्थ । वृक्षप्रकाशेन विद्युद्विद्योतनज्ञानाद्वृक्षस्य परिचायकता । द्वितीयार्थश्चाधेयत्व निरूपितत्व वा । द्वितीये साधुत्व प्रयोजकत्वम् , साधुत्वघटकक्रियान्वयी सम्बन्ध कर्मप्रवचनीयार्थ । सम्बन्धान्वयि प्रतियोगित्व वा निरूपकत्व वा द्वितीयार्थ । तृतीये भाग स्वत्वाश्रय प्रत्यर्थ । तदन्वयी सम्बन्धो द्वितीयार्थ । इत्थ चाऽस्मत्सम्बन्धी यो भाग स्यादिति बोध । चतुर्थे कर्मण्येव द्वितीया , प्रत्यर्थ एव सत्तात्मकम् , प्रतिश्च निरर्थक , 'गृहे गृहे ऽश्वा' इत्यादाविव व्यापकताया द्विरुक्तिलभ्यत्वात् । प्रतिशब्दस्य व्यापकतार्थकत्वे तु तादर्थ्येन 'गृह व्याप्नुवते ऽश्वा' इत्यादाविव द्विरुक्तिरेव न स्यात् ।

न च प्रतिशब्दस्यापि व्यापकतार्थकत्व 'प्रतिदिनमधीत' इत्यादौ दृष्टम् । द्विरुक्तेरपि 'वृक्ष वृक्ष सिञ्चती' त्यादौ दृष्टत्वमिति प्रवृद्धे

"सम्बन्धेनान्यतरवैयर्थ्य" मिति न्यायाद्द्वयोरेव व्यापकताबोधकत्वमवर्जनीयमिति वाच्यम् ; 'प्रतियाससमधीत' इत्यादावव्ययीभावे हि प्रथमातिरिक्तविभक्तेरसाधुत्वेन प्रतिशब्देन मासान्वितव्यापकत्वं क्रियाया बोध्यते । विभक्तिः साधुत्वार्था । 'वृक्षं वृक्षं प्रतिसिञ्चती' त्यत्र तु सेके द्वितीयार्थकर्मत्वावच्छेदप्रकृत्यर्थवृक्षविशेषितव्यापकता बोधयितुं न शक्यते । एकविशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वे व्युत्पत्तिविरोधात् । कर्मत्वसम्बन्धस्यैव च व्यापकताघटकत्वेन स्वीकरणीयतया वृत्त्यनियामकस्य तस्य तथात्वासम्भवाच्च । तस्य सेककर्मत्वे आश्रयतासम्बन्धघटितव्यापकताप्रत्यायनमपि न युज्यते, प्रकृत्यर्थसुबर्थयोरन्तरा नञर्थातिरिक्तभानस्य व्युत्पत्तिविरुद्धत्वात्, "नामूढस्येतरोत्पत्तेः" "नानुपमृद्य प्रादुर्भावा" दित्यादौ नञर्थप्रागभावस्य पञ्चम्यर्थहेतुताया विशेषणत्वेन प्रकृत्यर्थस्य च विशेष्यत्वेनान्वयात् । तस्मात्प्रतिरनर्थक एव । द्विरुक्तान्वये तात्पर्यग्राहकश्च सेचनकर्मत्वे वृक्षादेर्व्यापकत्वं संसर्गतयैव भासते ।

यदि च 'वृक्षं प्रति सिञ्चती' त्यादावुपसर्गस्य प्रतेर्वाच्यो द्योत्यो वा कश्चिदन्यो ऽर्थः, तदाऽस्तु स एवात्रापि तदर्थः । अत एव तस्यैवास्यापि प्रतिशब्दस्य प्रयोगो नानर्थः । वस्तुतः अनर्थकयोः कर्मप्रवचनीयाऽधिपरिशब्दयोः प्रयोगवत्तादृशप्रतेरपि प्रयोगस्य प्रयोजनान्तरानुपपत्तिभ्रान्त्या । प्रतेर्यत्र व्यापकतार्थकत्वम्, तत्र 'प्रतिवृक्षं सिञ्चती' त्यव्ययीभावसमास एव नियतः । तदर्थकाव्ययस्याव्ययीभावसमासविधेर्विभाषाधिकारीयताविरहेण नित्यत्वात्, अतो वीप्सया 'प्रतिवृक्षं सिञ्चती' तिवद् 'वृक्षं प्रतिसिञ्चती' ति न प्रयोगः । यत्र व्यापकत्वार्थकेनाव्ययेनाव्ययीभावसमासस्तदुत्तरं सर्वत्र प्रथमा विभक्तिरेव । न तु 'उपकुम्भं गच्छती' तिवत् 'प्रतिगृहे ऽस्था' इत्यादिरपि प्रयोगः, उक्तयुक्त्या तत्र प्रतिना ऽस्थादौ गृहादिव्यापकताया बोधयितुमशक्यत्वात् । तदाधारतादिरूपसप्तम्याद्यर्थे च समासार्थस्य गृहादिव्यापकत्वस्याश्रयतासम्बन्धेन तदर्थस्य व्यापकरूपधर्मिणो वा ऽभेदसम्बन्धेनान्वये 'मेयत्वे घटः, घटवृत्तौ घटः' इत्यादिप्रयोगवारणाय कल्प्यायाः सप्तम्यर्थाधारताया आश्रयत्वसम्बन्धेनाभेदसम्बन्धेन वा प्रकृत्यर्थान्वयव्युत्पत्तेर्विरोधात् ।

'उपकुम्भे निधेहि, उपकुम्भादागत, 'उपकुम्भेन कृतं' इत्यादौ च विवक्षितस्याधारत्वापादानत्वकर्तृत्वादौ कुम्भसमीपादिराधेयता-सम्बन्धेनान्वयस्याधेयत्वाद्) निरूपितत्वसम्बन्धेन तदन्वयस्य वा बोधे न कश्चिद्व्युत्पत्तिविरोध इत्युपपद्यन्ते तथा प्रयोगा इति ध्येयम् । 'त्वा च मा चान्तर' त्यादौ "अन्तरान्तरेण युक्ते" इति द्वितीयाया निरूपितत्वमर्थः । तस्यान्तरापदार्थतावच्छेदकमध्यत्वे ऽन्वय । एवमन्यत्रापि, तदर्थस्तूक्तदिशा स्वयं परिच्छेद्य ॥

॥ इति द्वितीयाविभक्तय. ॥

## ॥ अथ तृतीया ॥

कारकविभक्तितृतीयाया. क्रियान्वयि कर्तृत्वं करणत्वं चार्थ, "कर्तृकरणयोस्तृतीया" इत्यनुशासनात् । कर्तृत्वं च मुख्यं क्रियानुकूल कृतिरेव । सा च कर्त्राख्यातसमभिव्याहृते 'चैत्र पचति' इत्यादौ क्रियाविशेष्यतयाऽऽख्यातेन प्रतिपाद्यते, 'चैत्रेण पच्यते, शय्यते' इत्यादिकर्मभावाख्यातस्थले च क्रियाया विशेषणतया तृतीयया सा प्रत्याय्यते ।

ननु तत्राप्याख्यातार्थ एव कृति, तृतीयार्थश्चाधेयत्वम्, तस्य चाख्यातार्थकृतिविशेषणतयान्वय कृतेश्च क्रियाविशेषणतया । तथा कृतिबोधने चाख्यातस्य यगादि समभिव्याहारज्ञानमपेक्षितम् । 'पचति, पच्यते' इत्यादौ तथा तदन्वयबोधात् । 'चैत्रेण शय्यते, गम्यते' इत्यादौ तृतीयया आधेयतार्थकत्व कल्प्यमेवेति न तत्कल्पनम् विफलम् =

तन्न । 'चैत्रेण पक्व' मित्यादौ तृतीयायाः कृत्यर्थकताया आवश्यकत्वात् । तत्र कृत्यर्थकाख्यातविरहेण कृतश्च कर्तृकर्मवाचकत्वेन कृत्यर्थकताविरहात् । यदि च—कर्तृकृत कृतावेव शक्तिर्न तु विशिष्टे, शाते त्यादौ स्वाश्रयार्थकताया कृत क्लतत्वेन तत्र कृत्यन्वयादेव कर्तृलाभ-सम्भवादित्युच्यते ? तथापि कर्मकृत कृत्यर्थलाभप्रसक्तमेव । उक्तप्रत्य-यस्य क्व चित्कर्तृवाचकत्वेऽपि 'चैत्रेण पाच्यः, दुष्पचश्चैत्रेणौदनः, चैत्रेणौदनस्य पाक' इत्यादौ कृता न कृतिबोधकत्वमिति तत्र कृति-बोधानुरोधेन तृतीयायाः कृतिवाचकत्वमावश्यकम् । एवं च 'चैत्रेण पच्यते' इत्यादावपि तृतीययैव कृतिर्बोध्यते । तत्र चैत्रादेः सम्बन्ध एवाधेयत्वमित्यत्र एव निर्वाहे कृतावाधेयत्वस्य विशेषणतया भानोपगम-स्यानुचितत्वात् । तथा सति तत्संसर्गस्यापि विषयताकल्पनाधिक्यात् तादृशवाक्यस्थानपठितशब्दसामग्र्यामधिकोपस्थितिनिवेशेन च गौरवात् ।

अथ तत्र कृतस्तृतीयार्थतोपगमे 'चैत्रेण पच्यते न मैत्रेण' इत्यादौ तृतीयान्तार्थ-मैत्रीयकृतेरभावः पाके ऽन्वेतीत्युपेयम् । तस्याश्च समवायसम्बन्धावच्छिन्नाभावो मैत्रकर्तृकपाके ऽपीत्यतिप्रसङ्गः । जन्यतायाश्च वृत्त्यनियामकतया तत्सम्बन्धा-वच्छिन्नाभावः प्रसिद्ध्यन्न्येव न । मैत्रकर्तृकपाककर्मत्वाभावस्य कर्मणि तण्डुलादौ प्रतीतिश्च कर्मवाचकपदासमभिव्याहारस्थले दुर्घटा । आधेयत्वस्य तृतीयार्थत्वे चाधेयत्वाभावबोध एव कृतावङ्गीक्रियते । न च तथा सति मैत्रचैत्रोभयकर्तृकपाकस्थले चैत्रीयपाककृतौ मैत्रवृत्तित्वाभावसत्त्वात् 'मैत्रेण न पच्यत' इति प्रयोगापत्तिरिति वाच्यम्, 'मैत्रेण न पच्यत' इत्यत्र वर्तमानपाकानुकूलकृतित्वावच्छेदेन मैत्रवृत्तित्वाभावबोधनात्, उक्तस्थले च तादृशकृतित्वसामानाधिकरण्येन मैत्रवृत्तित्ववत्त्वात्तादृशवाक्याप्रामाण्यात् । वर्तमानत्वस्य कृतिविशेषणतया च 'चैत्रेण पच्यते ऽपच्यत न तु पच्यत' इत्युपपद्यते, क्रियाविशेषस्य तथात्वात् । यदा मैत्रेणान्यत्क्रियते न तु पच्यते, तदा 'मैत्रेण न पच्यत' इति प्रयोगश्च । न चाख्यातेन कालस्य कृतिविशेषणतया बोधनात्कालविशेषविशेषितकृतित्वस्यान्वयितावच्छेदकतया तदवच्छेदेन नञाऽभावः शक्यो बोधयितुम्, न तु कालक्रियाविशेषोभयविशेषित-

कृतित्वावच्छेदेन कर्मप्रत्ययस्थले, क्रियायाः कृतिविशेषणत्वाभावेन तद्घटित-धर्मस्यान्वयितावच्छेदकत्वाभावादिति वाच्यम्; क्रियाविशेषघटितधर्मस्यान्वयितानवच्छेदकत्वे ऽपि तदवच्छिन्नत्वविशिष्टविशेषणतया अभावसंसर्गतया भानसम्भवेन सामञ्जस्यात् । न चान्वयितावच्छेदकावच्छिन्नत्वमेव विशेषणसम्बन्धे भासत इति नियमः । तथा सति 'शरदि पुष्प्यन्ति सप्तच्छदा' इत्यादौ सप्तच्छदपुष्पोत्पत्तित्वादेः शरद्वृत्तित्वाद्यन्वयितानवच्छेदकतया आख्यातान्तप्रतिपाद्यतावच्छेदकपुष्पोत्पत्तित्वाद्यवच्छेदेन च शरद्वृत्तित्वाद्यन्वयाबाधादवच्छेदकावच्छेदेनान्वयानुपपत्तेः। अन्वयितावच्छेदकसामानाधिकरण्यमात्रेण च तदन्वयोपगमे 'शरदि पुष्प्यन्ति सप्तच्छदाः, शरदि पुष्प्यन्ति चम्पकाः' इत्यविशेषेण प्रयोगापत्तिः । यदि च तत्र शरत्सम्बन्धः सप्तच्छदविशेषणतया भासते न पुनराख्यातार्थे धातुमात्रार्थे वा पुष्पोत्पत्तौ, अत एव तत्र कारकविभक्तिरूपसप्तम्यनुपपत्त्या कालरूपविशेषणपदोत्तर स्वातन्त्र्येण सप्तमी शर्वधर्मणा अनुशिष्टा । एवं च क्रियानिमित्तत्वरूपकारकत्वगर्भकर्तृत्वस्याख्यातार्थत्वेन पुष्पोत्पत्तिनिमित्तत्वरूपाख्यातान्तार्थस्य विशिष्टान्वयानुरोधेन शरत्सम्बन्धेऽप्यन्वय उपगन्तव्य इति कारकत्वस्याख्यातार्थत्वानुपगमे ऽपि "शीतक सखे ऽपगादवशो निदाघदुःसमपैती" इत्यादाविवोद्देश्यविधेयभावमर्यादयोद्देश्यविशेषणेन शरत्सम्बन्धेन विधेयभूतपुष्पोत्पत्तेः प्रयोज्यप्रयोजकभावस्य संसर्गमर्यादया भानमौत्सर्गिकमिति चम्पकादिपुष्पोत्पत्तौ शरत्सम्बन्धनिमित्तकत्वाभावान्नोक्तातिप्रसङ्ग इत्युक्तस्थलेऽवच्छेदकावच्छेदेनान्वय

भावात्। न चावच्छेदकतावच्छिन्नत्वस्यावच्छेदकावच्छेदेन विशिष्टबुद्धौ विशेषणांशे भानमसम्भवदुक्तिकम्, ‘घटो द्रव्य’ मित्यादौ घटत्वावच्छेदेन द्रव्यत्वादिमत्त्वबुद्धौ द्रव्यत्वादिविशेषणस्य स्वरूपत एव भानादिति वाच्यम्; तादृशशाब्दबोधे द्रव्यत्वाद्यवच्छिन्नस्यैवाऽभेदसम्बन्धेन विशेषणत्वात्। घटत्वादिविशिष्टे द्रव्यत्वादिविशेषणकतादृशप्रत्यक्षेऽवच्छेदकावच्छिन्नत्वभानानुपगमे क्षतिविरहात्। तथा च ‘मैत्रेण न पच्यत’ इत्यादौ पाककृतित्वस्यान्वयितानवच्छेदकत्वेऽपि अर्थलभ्यतादृशधर्मावच्छिन्नत्वस्य प्रसर्गांशे भानं निराबाधमेवेति चेन्न,

‘मैत्रेण न पक्व’ इत्यादौ कृतौ मैत्रादिवृत्तित्वाभावबोधासम्भवेन कृतिजन्यत्वस्य तृतीयार्थता स्वीकृत्य क्रियायां मैत्रादिकृतिजन्यत्वाभावबोधस्य अवश्यमुपगन्तव्यतया ‘मैत्रेण न पच्यत’ इत्यादावपि तद्बोधोपगमेन सामञ्जस्यात्। न च यदा मैत्रः सुप्तस्तदा ‘मैत्रेण पच्यते न तु पच्यत’ इति प्रयोगानुपपत्तिः, मैत्रवृत्तिवर्तमानकृतेरप्रसिद्ध्या तादृशकृतिजन्यत्वाभावप्रत्यायनासम्भवात्, वर्तमानत्वाविशेषिततदीयकृतिजन्यत्वाभावस्य च बाधितत्वादिति वाच्यम्, आख्यातार्थवर्तमानत्वादेर्नञ्समभिव्याहारस्थलेऽभावांश एवाऽन्वयस्य व्युत्पन्नत्वात्। अन्यथा ‘विनष्टघटं न पश्यती’ त्यादौ तादृशघटकर्मकवर्तमानदर्शनाप्रसिद्ध्या ऽन्वयबोधानुपपत्तेः। प्रकृते च मैत्रीयवर्तमानकृत्यप्रसिद्धावपि वर्तमानकालावच्छिन्नतज्जन्यत्वाभावस्यैव पाके प्रतीत्या सामञ्जस्यात्। पाकत्वाद्यवच्छेदेनैव मैत्रादिकर्तृकत्वाभावबोधोपगमान्मैत्रादिकर्तृकपाकदशायामन्यकर्तृकपाके मैत्रादिकर्तृकत्वाभावसत्त्वेऽपि ‘न पच्यते मैत्रेण’ इत्यादयो न प्रयोगाः। यत्र मैत्रेणौदनः पच्यते न तु तेमनम्, तत्र ‘मैत्रेण न पच्यते तेमन’ मित्यादिप्रयोगनिर्वाहाय तेमनपाकत्वाद्यवच्छेदेनैवाभावान्वयबोध उपगम्यते, न तु शुद्धपाकत्वाद्यवच्छेदेन, बाधितत्वात्। यथा च तेन रूपेण शब्दादनुपस्थितत्वेऽपि तदवच्छेदेनान्वयबोधनिर्वाहस्तथोपपादितमाधेयत्वस्य तृतीयार्थत्ववादिनैव।

‘घटेन न पच्यत’ इत्यादयः प्रयोगाः ‘आकाशं न पश्यती’ त्यादिप्रयोगसमानयोगक्षेमा एव मन्तव्याः। अचेतनस्य काष्ठस्थाल्यादेरपि कर्तृत्वविवक्षया

'काष्ठं पचति, स्थाली पचती'त्यादिवत् 'काष्ठेन पच्यते स्थाल्या पच्यत' इति प्रयोगात्। तत्र व्यापाररूपे कर्तृत्वे तज्जन्यत्वरूपे तत्कर्तृकत्वे वा तृतीयाया लक्षणा। एवं 'चैत्रेण ज्ञायते, इष्यते, गम्यत' इत्यादावाश्रयत्वरूपे कर्तृत्वे आश्रयत्वरूपे कर्तृमत्त्वे वा, 'नश्यते घटेने'त्यादौ प्रतियोगित्वरूपे कर्तृत्वेऽनुयोगित्वरूपे कर्तृमत्त्वे वा लक्षणा। कर्तृपदमपि व्यापारादिमत्यचेतनादौ भाक्तमेव, अचेतनादौ स्वरसतः कर्तृपदाप्रयोगात्। अत एव च कृञो यत्नवाचकत्वम्।

न च यत्नवत एव कर्तृपदार्थत्वे "कर्तृकरणयोस्तृतीया" इत्यादौ कर्तृपदस्य मुख्यार्थत्यागे युक्तिविरहात् अचेतन * काष्ठादिवाचकपदयोगे कर्तृप्रत्ययानुपपत्तिरिति वाच्यम्; सूत्रस्थकर्तृपदानां "स्वतन्त्रः कर्ते"ति सूत्रेण परिभाषितकर्तृपरत्वात्। अन्यथा तत्प्रणयनवैयर्थ्यप्रसङ्गात्। स्वतन्त्रत्वं च कारकान्तरव्यापारानधीनत्वे सति कारकत्वम्। 'काष्ठं पचती'त्यादौ स्वातन्त्र्यविवक्षया काष्ठादेः कर्तृत्वम्।

न च स्वातन्त्र्यविवक्षणेऽपि पुरुषव्यापाराधीनक्रियानुकूलव्यापारवताभिन्नान्यव्यापारानधीनक्रियानुकूलव्यापारवत्त्वरूपस्य स्वातन्त्र्यस्य वास्तविकस्याभावात् तद्बोधकविभक्तीनामप्रामाण्यं दुर्वारमेवेति वाच्यम्, समभिव्याहृतक्रियाकारकान्तरव्यापारानधीनतत्क्रियानुकूलव्यापारस्यैव तत्क्रियावाचकपदसमभिव्याहृतविभक्त्यर्थत्वात्। अनधीनान्तविशेषणप्रयोजनं च, 'चैत्रः काष्ठैः स्थाल्या पचती'त्यादिस्थले 'चैत्रः स्थाली काष्ठानि पचन्ती'ति प्रयोगवारणम्। यत्र च 'चैत्रः पचति काष्ठं पचती'त्यादौ समभिव्याहृतकारकान्तरापेक्षयाऽनधीनत्वारोपेण न प्रतीयत एव, तत्क्रियादेः तत्र व्यापारादेः स्वतन्त्रतयाऽवगमनात्। विशिष्टार्थकशक्त्या विशेष्यविशेषणबोधजननात्।

न च 'मैत्रः चैत्रेण पाचयती'त्यादौ हेतुकर्तृसमभिव्याहारस्थले कर्तरि तृतीयानुपपत्तिः, कर्तृव्यापारस्य समभिव्याहृतहेतुव्यापाराधीनत्वा

---

* काष्ठादिपदयोगे इति च पाठः।

दिति वाच्यम्; तत्र ण्यन्तप्रतिपाद्यपाचनादिक्रियायामेव हेतौ कारकतया स्वतन्त्रकर्तृव्यापारस्य पच्यादिक्रियाया कारकान्तरव्यापारानधीनत्वात् । स्वतन्त्रप्रयुञ्जानस्य पुंसो व्यापारस्तण्डुलक्रयणादिवत्पाकादावन्यथासिद्धतया न कारणमिति पाकादिप्रयोजकव्यापारवत्त्वे ऽपि तस्य तत्क्रियाकारकत्वाभावात् । अत एव 'चैत्रो मैत्रेण पाचयती' त्यादौ 'चैत्रः पचती' ति न प्रयोगः ।

न च 'पञ्चभिर्हलैः कर्षति गृही' इत्यादौ भूमिलेखनरूपकृष्यादिक्रियाया स्वतन्त्रकर्तृन् प्रयुञ्जानस्य गृहिणो व्यापारस्य दर्शितयुक्त्या लकारादिना ऽभिधानासम्भव इति 'कर्षती' ति न स्यात्, 'कर्षयती' ति च स्यादिति वाच्यम्; तत्र कृषेः प्रतिविधानार्थत्वात् । उक्तं च—,

"याजका यजन्तीति—यजिर्हविःप्रक्षेपार्थः ।
पञ्चभिर्हलैः कर्षती ति—कृषिः प्रतिविधानार्थ" इति ।

यजेर्देवतोद्देश्यकद्रव्यत्यागेच्छाविशेषरूपार्थे मुख्यतया तत्र च यजमानस्यैव कर्तृतया हविःप्रक्षेपरूपलक्ष्यार्थपरत्वं दर्शितम् । तत्र च ऋत्विजामेव स्वातन्त्र्यम् । होतेत्यत्रापि हविःप्रक्षेप एव हुधातोरर्थो न तु तादृशफलावच्छिन्नस्त्यागः । तथा सति ऋत्विजस्तत्र स्वतन्त्रकर्तृताविरहेण होतृपदेन प्रतिपादनासम्भवात् । धात्वर्थतावच्छेदकफलकर्तृत्वमेव कर्तृमत्ययेन प्रतिपाद्यत इति ऋत्विजि होतृव्यवहारो न यद्यपि । अतः प्रतिग्रहीतृव्यापारो न स्वत्वजनकः, तथा सति तत्र दातृव्यवहारापत्तेरिति तु जीमूतवाहनः ।

अथास्तु 'चैत्रेण मैत्रेण पाच्यत' इत्यादौ स्वतन्त्रव्यापारस्य हेतुकर्तृव्यापाराधीनत्वे ऽपि दर्शितरीत्या तस्य स्वतन्त्रकर्तृत्वानिर्वाहः, तथापि तद्वाचकपदोत्तर तृतीयानुपपत्तिः, कर्तृत्वस्य णिच्प्रत्ययेनाभिधानादिति चेन्न; कर्तृत्वनिर्वाहकस्वातन्त्र्येण पाकाद्यन्वयिनो हेतुकर्तृव्यापारस्य णिजर्थत्वेन स्वतन्त्रकर्तृत्वस्य णिचाऽनभिधानात् । कर्तृत्वरूपफलावच्छिन्नस्य तादृशव्यापारस्य णिजर्थतामतेऽपि आश्रयोपरक्तस्य कर्तृत्वस्याऽन्यतोऽभानानिर्वाहेण कर्तुरनभिधाना-

तृतीयोपपत्तिः । आख्यातस्य धर्मवाचकत्वे ऽपि कृतिविशिष्टबोधकत्वरूपस्य कर्त्रभिधानस्याक्षतत्वात् 'चैत्र पचती' त्यादौ न तृतीया ।

न चैवं मुख्यविशेष्यतया कृतिबोधकत्वरूपस्य कर्त्रभिधानस्य विवक्षाया चैत्रेण पचतीति स्यादिति वाच्यम्, आश्रयातिरिक्तांशे ऽविशेषणतया कृतिबोधनस्यैव कर्त्रभिधानरूपत्वात् । तथा तदभिधानं च ल्कृत्तद्धितसमासानामेव । अत एव तैरेवाभिधानं वृत्तिकृता विवृतम् ।

इदं त्ववधेयम्—यद्यपि स्वतन्त्रव्यापारमात्र एव तृतीयादेरनुशासनम्, तथापि लाघवात्कृतिरूप एव कर्तृत्वे तृतीयादेः शक्तिः । अचेतनव्यापारे निरूढलक्षणैव । अनुशासनस्यानादितात्पर्यमात्रग्राहकत्वात्, लाघवसहकृतस्यैव तादृशतात्पर्यस्य शक्तिकल्पकत्वात् व्यापारे तत्त्वे ऽपि गौरवेण शक्त्य सिद्धेः । एवं च कर्तृत्वरूपकृतिबोधस्थले कारकान्तरव्यापारानधीनत्वं न प्रतीयत इति तदन्तर्भावेन शक्तिकल्पने मानाभावः । व्यापारलाक्षणिकेन कर्तृप्रत्ययेन लक्षणया तदन्तर्भावेन व्यापारबोधनादेव पूर्वोक्तातिप्रसङ्गवारणात् । अन्यथा तदन्तर्भावेन कृतिशक्तावपि तादृशातिप्रसङ्गस्य दुर्वारत्वादिति ।

'घटो जायते, ओदनं सिद्ध्यति' त्यादौ सत्कार्यवाद विद्वेषिणां नैयायिकानां कारकत्वं कर्तृत्वं च घटौदनादेर्यथाश्रुतसूत्रानुसारेण दुरुपपादमत, मुख्यं च क्रियाकर्तृत्वम्, न क्रियानुकूलकृतिमात्रम् । एकक्रियाविषयककृतितो यत्र नान्तरीयकक्रियान्तरनिर्वाहस्तत्र तत्कृतिमतस्तत्क्रियाकर्तृत्वाभावात् । अत एव 'मत्तो भूतं न तु मया कृतं' मिति व्यपदेश इति । किन्तु तत्क्रियाविषयकत्वे सति तदनुकूला या कृतिस्तद्वत्वं तत्कर्तृत्वम् । अ योद्देशेन नाराचक्षेपाद्यत ब्राह्मणवधस्तत्र मरणानुकूलस्य नाराचक्षेपरूपव्यापारस्य कृतिविषयत्वे ऽपि ब्राह्मणमरणानुकूलव्यापारत्वेन तस्याज्ञाभसहितत्वात्तेन रूपेण कृतिविषयत्वं न तादृशव्यापारस्येति ब्राह्मणवधत्वेन कर्तृत्वं न तादृशव्यापारकर्तुरिति न तस्य सम्पूर्णप्रायश्चित्तम् । अत एव सम्पूर्णप्रायश्चित्तप्रयोजकस्य च तद्व्यापारस्य स्वरूपतोऽभिप्रायेण हिंसात्मके मणिकृता मरणोद्देशेनानुष्ठीय-

मानत्वाऽदृष्टाद्वारकत्वविशेषणयोरुपादानमिति मिश्राभिमानसङ्गतिः । मरणोद्देशेनानुष्ठीयमानस्य व्यापारस्यावश्यं मरणानुकूलव्यापारत्वेन प्रतिसन्धितत्वात्तादृशरूपेण कृतिविषयत्वमिति तादृशविशेषणस्य विशिष्टकर्तृतानिर्वाहकत्वात्तद्विशेषणवतो व्यापारस्य नियमेन लक्ष्यत्वात्, तच्छून्यस्य चाऽलक्ष्यत्वनियमात् ।

अथ मरणोद्देशेनानुष्ठितस्यापि व्यापारस्य यत्र खड्गाभिघातत्वादिनैवेष्टसाधनत्वप्रकारकसाध्यत्वधीविषयता न तु मरणानुकूलत्वविशेषिततद्रूपेण, तत्र न मरणानुकूलत्वावच्छिन्नविषयिणी कृतिरिति तादृशव्यापारकर्तृत्वे वधकर्तृविशिष्टकर्तृत्वमिति कथमुक्तविशेषणस्य विशिष्टकर्तृतानिर्वाहकत्वम्? यदि च मरणोद्देशेनानुष्ठीयमानत्वमित्यस्य मरणानुकूलत्वेन कृतिविषयत्वमेवाऽर्थ इत्युपेयते, तदा व्यापारे तादृशविशेषणस्य तत्कर्तरि विशिष्टकर्तृतानिर्वाहकत्वे ऽप्युक्तस्थले खड्गाभिघातादौ तादृशलक्षणाव्याप्तिर्दुर्वारैव । तत्र सम्पूर्णप्रायश्चित्तस्य निर्विवादतया लक्ष्यताया आवश्यकत्वात् । न च विशेषणीभूतफलनिष्ठोद्देश्यतानिरूपितविषयतानिरूपकत्वे सति व्यापारनिष्ठसाध्यतानिरूपितविषयतानिरूपकत्वमेव विशिष्टविषयकत्वं कृतावित्युपदर्शितस्थले ऽनुकूलतासम्बन्धेन मरणवैशिष्ट्यस्य साध्यतारूपकृतिविषयतावच्छेदकत्वविरहे ऽपि न विशिष्टकर्तृत्वानिर्वाह इति मरणोद्देशेनानुष्ठीयमानत्वस्य मरणकामनाधीनकृतिविषयत्वरूपतैवेति वाच्यम्, 'ब्राह्मणं न हन्यात्' इत्यादौ धात्वर्थतावच्छेदकस्य मरणस्य स्वोद्देश्यकत्वसम्बन्धेन कृतावन्वयासम्भवप्रयुक्तनिरुक्तविशिष्टकर्तृत्वस्य निषेधविधिविषयत्वासम्भवात् । व्यापारविशेषणत्वेनोपस्थितस्य कृत्यंशे विशेषणतया अन्वयस्य व्युत्पत्तिविरुद्धत्वात् ।

अथ मरणोपलक्षितव्यापारकर्तृत्वस्य तादृशनिषेधविषयत्वे ऽपि क्षतिः, अन्योद्देशेन नाशनक्षेपस्यापि ब्राह्मणमरणोपधायकस्य नरकसाधनत्वात् । पर तु मरणप्रायश्चित्तविधेरेव तदविषयकत्वमुपपादनीयम्, तच्च मरणोद्देशेन तदनुकूलव्यापारं कर्तुं बाधकस्य शब्दस्य तद्विधायकत्वेऽपि एवोपपद्यत इति चेत्, एवमपि ब्राह्मणमरणकामनया यत्र न तन्मरणा-

अन्यथासिद्धत्वात् । मरणोपलक्षितान्यकर्तृकखड्गाभिघातादिरूपवैरिवध प्रत्येन श्येनस्य हेतुताया वेदेन बोधितत्वात् । क्रियाजन्यकार्ये तत्क्रियानुकूलकृतिहेतुताया नियमे ऽपि खड्गाभिघातादावेव श्येन कृतहेतुत्वात् । तथा चानिष्ट विशेषफलजनकतावच्छेदकप्रत्यासत्तिप्रविष्टमरणानुकूलत्व मरणजनकत्वमेव, न तु प्रयोजकत्वम्, अतो ऽदृष्टद्वारकत्व न तत्र निवेशनीयम् । कारणत्व पर्यन्तनिवेशलाभायैव वा तदुपादानम् । यदि च विशिष्टान्वयपरतायां वेदे औत्सर्गिकत्वेन वधसाधनताबोधकश्रुत्या विशेषणीभूतमरणसाधनतापि श्येनस्य प्रत्याय्यते, तदापि श्येनानुकूलकृतेर्मरणसाधनत्वमप्रामाणिकमेव । क्रियाजनककृतेस्तज्जन्यजनकतानियमस्याप्रामाणिकत्वात् । अथान्योद्देशेन नाराचक्षेपकर्तुर्विशिष्टविषयककृतिमत्त्वघटितविशिष्टकर्तृताविरहे ऽपि यथाऽधवधजन्यपापप्रायश्चित्त तथा श्येनकर्तुर्विशिष्टकर्तृत्वात्पापदस्याश्वयकत्वादवलव-दनिष्टाननुबन्धित्वबाधो दुर्वार एवेति चेन्न, अकामकृतेऽप्यधप्रायश्चित्त स्मरणेन मरणावच्छिन्नव्यापारस्य विषयतामन तर्भाव्य विशिष्टजनककृतिमत्त्व सम्बन्धेन न्यूनपापे स्वतन्त्रहेतुत्वकल्पनात् तद्बलेन विशिष्टाकर्तुः श्येनकर्तुर्हिंसाजन्यपापानुत्पत्तेः । न च लाघवेन मरणोपलक्षितव्यापार जनकत्वमेव प्रत्यासत्तिमध्ये निवेश्यतामिति वाच्यम्, श्रुत्यर्थबाधापादकला घवस्याप्रयोजकत्वात् । वेदस्थले विशिष्टान्वयस्यौत्सर्गिकत्वे ऽपि श्येनस्य मरणजनकत्व विध्यर्थबाधप्रसङ्गेन मरण प्रति श्येनस्यान्यथासिद्धताया एवोपगन्तव्यतया तस्य जनकतागर्भहिंसात्वघटितावच्छेदकरूपवत्ताया अपि दुरुपपादत्वात् । न च यदि खड्गाभिघातजनकादृष्टव्यवहितस्य श्येनस्य मरणे ऽन्यथासिद्धत्व तदा हननकर्तृव्यापारो ऽपि तत्रान्यथासिद्धः स्यात्। यश्च व्यापारो मरणे ऽव्यवहितसाधनम्, तत्र तद्धेतु कृतिरेवान्यथासिद्धेति, मरणकारणव्यापारकारणकृतिमत्त्वं न कस्यापि हेतु स्यादिति वाच्यम्, तण्डुलविक्लित्त्यादिरूपफलव्यवहितस्यापि तुषादिप्रक्षेपस्य तत्करणदशाया पच तीत्यादिव्यवहारानुरोधेन यथा ऽनन्यथासिद्धत्व तथा खड्गप्रक्षेपादिकर णदशाया हन्तीति व्यपदेशानुरोधेन तत्र व्यवहितस्यापि मरणे ऽनन्यथा सिद्धत्वमवश्याभ्युपेयमिति सामञ्जस्यात् । तण्डुलक्षयणदशाया पचतीत्या द्यभाववत् खड्गादिनिर्माणदशाया हन्तीत्यव्यवहाराद्व्यापारो मरणे ऽन्य

यासिद्धतया न हिंसा । व्याघ्रमरणोद्देशेन कृतो यन्त्रार्पणादिर्यथा तत्र दैवाद्गवादिमरणेऽपि न हिंसारूपस्तथा न व्याघ्रादिहिंसारूपोऽपि । तत्करणदशायां हन्तीत्यप्रयोगात् । अतथात्वेऽपि तन्मरणोद्देश्यकादृष्टद्वारकतन्मरणप्रयोजककृतिजन्यव्यापारस्यापि हिंसावत् पापजनकत्वादुक्तस्थले गोवधाभिसन्धाने गोवधप्रायश्चित्ताचरणमित्यवधेयम् ।

एवं च 'चैत्रः पचती'त्यादौ विषयताघटितकर्तृत्वबोधनिर्वाहाय यथा कृतौ पाकादेरुपधायकत्वविषयित्वोभयसम्बन्धेनान्वयः, विषयितायाः सम्बन्धत्वेऽपि उपधायकत्वनिवेश आवश्यकः, पाकाद्यनिष्पत्तिस्थले 'पचति, * पक्ष्यती'त्यादिप्रयोगस्य प्रामाण्यवारकत्वात्, तथा 'चैत्रेण पच्यते' इत्यादावपि तृतीयार्थकृतेर्जन्यत्वविषयित्वोभयसम्बन्धेनान्वयो बोध्यः । कृतिजन्यत्वस्य तृतीयार्थत्वे जन्यत्वसम्बन्धघटक एव स्वनिरूपकविषयत्वं प्रवेशनीयम् । कृतिविषयत्वमेव वा तृतीयार्थः । स्वनिरूपकजन्यत्वं विषयताया सम्बन्धघटकेऽन्तर्भावनीयम् । 'काष्ठेन पचती'त्यादौ करणत्वं तृतीयार्थः । तच्च व्यापारवत्कारणत्वम् । व्यापारे कर्तृव्यापाराधीनत्वं निवेशनीयम् । अन्यथा कर्तुरपि करणतापत्त्या 'चैत्रेण पचति, काष्ठं चैत्रेण पचती'त्यादिप्रयोगापत्तेः । न च कर्तृश्चेष्टादिरूपव्यापारस्य तदात्मकृत्यादिरूपव्यापाराधीनतया तद्विशेषणदानेऽपि कर्तुः करणत्वं दुर्वारमेवेति वाच्यम्, स्वभिन्नत्वेन कर्तुर्विशेषणीयत्वात् । यो वै पाकादिक्रिया चैत्रेण काष्ठादिना मैत्रेण तुषादिप्रक्षेपेण निष्पाद्यते, तत्र 'चैत्रस्तु मैत्रेण काष्ठैः पचती'ति प्रसङ्गः. समभिव्याहृतकर्तृव्यापाराधीनत्वस्य तत्तत्करणव्यापारे भानमुपगम्य वारणीयः ।

न च समभिव्याहृतकर्त्रन्तर्भावेण तृतीयार्थत्वे कर्त्रसमभिव्याहारस्थले करणे तृतीयाया अप्रयोगापत्तिरिति वाच्यम्, तथापि 'हेतौ' इति सूत्रेण हेतुत्वमात्रार्थकतृतीयासम्भवात्, "धनेन कुलं विद्यया यशः" इत्यादिवत् न हि तत्र करणे तृतीया नियामकाभावात् । न चैवमुक्त

---

* पक्ष्यति-इति पाठान्तरम् ।

स्थले 'चैत्रस्रुवेण पचती' ति प्रयोगस्य 'हेता' विति सूत्रबलादापद्यमानस्य विनोत्तराभावात्समभिव्याहृतकर्त्रन्तर्भावस्य करणे स्वतन्त्रतृतीयानुशासनस्यैव वा वैयर्थ्यमिति वाच्यम्, उक्तस्थले पाके स्रुवहेतुकत्वाभावबोधेऽपि 'चैत्रस्रुवेण न पचति किन्तु दारुणैवे' ति प्रयोगोपपत्तये समभिव्याहृतकर्त्रन्तर्भावेण तृतीयायाः शक्तिकल्पनाया आवश्यकत्वात्, तद्ग्राहकतयैव करणे तृतीयानुशासनस्यावश्यकत्वात् ।

"शरैः शातितपत्रोऽयः" मित्यादौ तृतीयाया कारकविभक्तित्व एव तदर्थान्वितार्थकशातितादिपदेन समासस्य साधुतानिर्वाहाय । न च तृतीयाया समभिव्याहृतकर्त्रन्तर्भावेण करणत्वार्थत्वे तत्र समभिव्याहृतकर्त्रभावात् अकारकविभक्तित्व करणे तृतीयानुशासने ऽपि दुर्वारमेवेति वाच्यम्, एतदनुरोधेन तत्र कर्तुरध्याहरणीयत्वात् ।

वस्तुतः समभिव्याहृतकर्तृव्यापाराधीनत्वे व्यापारवत्कारणत्वे च तृतीयायाः शक्तिद्वयम्, कर्त्रसमभिव्याहारस्थले व्यापारवत्कारणत्वमात्र प्रतीयते, कर्तृसमभिव्याहारस्थले च व्यापारे तद्व्यापाराधीनत्वमपीति सामञ्जस्यम् । एवं हेत्वनुशिष्टतृतीयायाः "अकर्तर्यृणे" इत्यनेन बाधनात्करणत्वविवक्षाया 'धनवता ऋणेन बद्धोऽय' मित्यत्र तृतीयाया उपपत्तये करणे तृतीयानुशासनस्यावश्यकता । कारणत्व च फलोपधानतारूपमेव करणतापदकम्, अन्यथा कुठारादिकरणकच्छिदादौ दात्रादेरपि स्वरूपयोग्यतया करणत्वापत्तेः । लिङ्गज्ञानस्यानुमितिकरणतामते 'धूमेन वह्निमनुमिनोमी' त्यादौ धूमादिपद तज्ज्ञानपरम् । व्याप्तिविशिष्टहेतुज्ञानस्य व्यापारस्तद्विशिष्टवैशिष्ट्यावगाही परामर्शः । स चात्ममनोयोगादिरूपानुमातृपुरुषव्यापाराधीन इति तस्य निरुक्तकरणत्वमबाधितमेव । धूमादिलिङ्गकवह्न्यनुमितौ यत्र लिङ्गान्तराद् घटादिभान तत्र 'धूमेन घटमनुमिनोमी' ति न प्रयोगः । अन्वयितावच्छेदकतद्विधेयकानुमितित्वावच्छेदेनैवान्वयितावच्छेदकधूमादिविषयकज्ञानत्वावच्छिन्नत्वेन भासमानस्य करणत्वस्य निरूपकत्वमानोपगमात् । निरूपकत्व तु करणतामात्रस्य तृतीयार्थताबादिना प्राचा मते सुसङ्गतः ।

नव्यमते तु करणतानिरूपकत्वस्यैव नञर्थाभावे प्रतियोगित्वेनान्वयानुरोधात्तादृश-
यत्नस्य तृतीयार्थतया प्रकार एवेत्यन्यदेतत् ।

परे तु–लिङ्गज्ञानस्य करणत्वेऽपि 'धूमेन वह्निमनुमिनोमी' त्यादौ धूमा-
दिपद मुख्यार्थपरमेव, 'हेतौ' विति सूत्रेण तत्र तृतीया, हेतुत्वस्य कार-
णतावच्छेदकसाधारणप्रयोजकत्वरूपस्य तत्र विवक्षितत्वात् । जनकज्ञानविष
यधूमादेश्चानुमितिकारणतावच्छेदकतया प्रयोजकत्वमक्षतमेव । उक्तसमूहाल-
म्बनस्थले ऽतिप्रसङ्गश्च वह्निविधेयकानुमितित्वावच्छेदेन प्रयोजकतानिरूपक
स्वभानाभ्युपगमेन वारणीय । वस्तुतो जनकतावच्छेदकनिष्ठप्रयोजकतानि
रूपकत्व कार्यस्यैव कार्यतावच्छेदकस्याप्यक्षतम्, प्रतीतिसाक्षिक च । तथा
चानुमितिविशेषणतत्तद्विधेयकत्वरूपमुवन्तार्थं एव तृतीयार्थान्वय उपगम्यते ।
समूहालम्बनानुमितिनिष्ठघटादिविधेयकत्वस्य धूमाद्यप्रयोज्यतया नोक्तातिप्रस
ङ्ग । 'धूमेन वह्निमनुमिनोमि न घटेने' त्यादावनुमितौ घटादिप्रयोज्यत्वा-
भावो नान्वेति । अपि तु नञोऽसत्त्वे प्रतियोग्यन्वयित्व यत्र तत्र वह्न्या
दिविधेयकत्व एव, अतो यत्र धूमादिलिङ्गक वह्न्यनुमितौ घटादिरूपलि
ङ्गाधीन द्रव्यत्वादिभान तत्र 'धूमेन वह्निमनुमिनोमि, न घटेने' ति
प्रयोगोपपत्ति । समूहालम्बनरूपतादृशानुमितौ घटादिरूपलिङ्गप्रयोज्यत्वाभा
वस्याऽसत्त्वे ऽपि वह्न्यादिविधेयकत्वे तदबाधात् । न ह्यनुमितावपि
द्रव्यत्वादिविधेयकत्वावच्छिन्नस्य घटादिलिङ्गप्रयोज्यत्वस्य वह्न्यादिविधेयक
त्वावच्छेदेनाभावो बोध्यत इति सम्भवति, प्रयोज्यताया व्याप्यवृत्तित्व विरहात् ।
एतेन अनुमितौ धूमादिलिङ्गज्ञानकरणकत्व तृतीयया प्रत्याय्यते, करण एव
तृतीया स्यादिति मत प्रत्युक्तम्, उक्तस्थले ऽनुमितौ नञर्थान्वययोग्य
ताया अनुपपत्ते । वह्न्यादिविधेयकत्वे धूमादिज्ञानरूपकरणजन्यतावच्छेद-
कत्वतदभावौ तृतीयान्ततत्समभिव्याहृतनञ्भ्या प्रत्याय्येते इत्यपि न सत् ।
कारकविभक्त्यर्थस्य क्रियातिरिक्ते ऽनन्वयात् । न च उक्तस्थले वह्न्या
दिविधेयकत्वावच्छेदेन घटादिरूपलिङ्गज्ञानजन्यतावदनुमितिभिन्नाभाव. पुरुष-
निष्ठो नञा प्रत्याय्यते, तादृशानुमितिविरहादौ वह्न्यादिलिङ्गकभ्रमदशा यो
प्रतिबन्द्या बाध्यम्, 'धूमेन वह्न्यनुमानमिद न घटेने' त्यादावनुमिति
भ्रमाविषयमात्रबोधानुपपत्तिरिति वाच्यम् ।

'पर्वतो धूमेन वह्निमा' नित्यादौ क्रियायोगाभावाद्धेतुतृतीयैव, तत्र ज्ञापकज्ञानविषयत्वरूपं हेतुत्वं ज्ञानज्ञाप्यत्वरूपं वा हेतुमत्त्वं तृतीयार्थः । हेतुशब्दो यद्यपि कारणपर्यायो न तु ज्ञापकपर्यायस्तथापि 'हेतौ' विति सूत्रस्थहेतुपदं न समभिव्याहृतनिरूपितहेतुतामात्रपरम्, अपि तु समभिव्याहृततज्ज्ञानान्यतरनिरूपितहेतुतापरमेवेति समभिव्याहृतवह्न्यादिज्ञानहेतुज्ञानविषयधूमादिपदादपि तृतीया सत्सूत्रेणानुशिष्यते । गुणे हेतौ पञ्चम्या विकल्पेन विधायकसूत्रान्तरमप्यन्यतरनिरूपितहेतुताविषयकमेव, अतो जाड्यपदवद् जाड्येन बद्ध इत्यत्र जाड्यस्य हेतुतावद् धूमाद्वह्निमान् धूमेन वेत्यादौ धूमादेर्वह्न्यादिज्ञानहेतुता प्रतीयते । हेतुत्वं च पूर्वोक्तं प्रयोजकत्वमेव । गुणपदं च न चतुर्विंशतिपरम्, धूमादिहेतौ तत्त्वासम्भवात् । न च तत्र धूमादिपदं तज्ज्ञानपरमेवेति तादृशगुणत्वमेव वह्न्यादिहेतोरिति वाच्यम्, तत्र धूमादिपदस्य ज्ञानलाक्षणिकत्वे ऽपि 'अज्ञानाद् बद्ध' इत्यादावभावरूपबन्धादिहेतोस्तथात्वासम्भवात् । नापि धर्ममात्रपरम्, गगनादेरपि कालिकसम्बन्धेन धर्मतयाऽव्यावर्तकत्वात् । समवायादिना धर्मत्वं चाभावादावप्राहकम् । नापि द्रव्याश्रितत्वम्, 'सत्तावान् गुणत्वा' दित्यादौ पञ्चम्यन्तस्यालाक्षणिकत्वपक्षे पञ्चम्यनुपपत्तेः । किन्तु कार्यस्य ज्ञाप्यस्य वाऽऽश्रये आश्रितत्वम् । जाड्यादेः स्वप्रयोज्यबन्धाश्रये धूमादेश्च स्वज्ञाप्यवह्न्याद्याश्रये आश्रितत्वाद् गुणत्वम् । हेतौ तद्विशेषणप्रयोजनं च, 'पितुः पाण्डित्येन पुत्र आहूतः' 'धूमस्य स्वस्मिन् सत्त्वेन पर्वतो वह्निमा' नित्यादौ पञ्चमीवारणम् । ज्ञापकत्वं च तज्ज्ञानजनकप्रमाविषयत्वम्, ज्ञाप्यत्वमपि प्रमाजन्यज्ञानविषयत्वम् । अतो वह्न्यादेर्व्याप्यताभ्रमेण धूमादिज्ञापकत्वसत्त्वे ऽपि 'वह्निना वह्नेर्वा धूमवानय' मित्यादयो न प्रयोगाः ।

प्रमात्वं च 'यावद्धर्मभिन्नत्वरूपं विवक्षणीयम्, तेन 'धूमव्याप्यो वह्नि' रित्यादिज्ञानस्य वह्नित्वाद्यंशे प्रमात्वमादाय नोक्तातिप्रसङ्गः । द्रव्यत्वादेः प्रमेयत्वावच्छिन्नवह्न्यादिज्ञापकत्वे ऽपि विशिष्टद्रव्यत्वत्वादिना वह्नित्वाद्यवच्छिन्नज्ञापकत्वे ऽपि च 'पर्वतो वह्निमान् द्रव्यत्वाद् द्रव्यत्वेन वे' त्यादिर्न प्रयोगः । अन्वयिताव्च्छेदकवह्नित्वद्रव्यत्वत्वादि-

ना ज्ञाप्यज्ञापकभावस्य तृतीयादिना बोधनात् तत्र तेन रूपेण, ज्ञाप्यज्ञापकभावविरहात् ।

एवं ज्ञाप्यवह्न्यादिमत्त्वान्वयितावच्छेदकपर्वतत्वावच्छिन्नांशे ज्ञापकत्व ज्ञाप्यत्व वा प्रतीयत इत्यपि नियमः, तेन 'पर्वतो वह्निमान् महानसत्वात्तेन वे' त्यादयो न प्रयोगाः ।

अत्रेदमवधेयम्; 'पर्वतो वह्निमान् धूमात्र द्रव्यत्वान्नापि महानसत्वा' दित्यादौ नञा वह्न्यादौ द्रव्यत्वमहानसत्वादिज्ञानज्ञाप्यत्वाभावबोधने बाधः, तत्र प्रमेयत्वादिना द्रव्यत्वादिज्ञानज्ञाप्यत्वस्य महानसादौ महानसत्वादिज्ञानज्ञाप्यत्वस्य च (सत्त्वेऽपि) सत्त्वात् वह्नित्वादिना द्रव्यत्वादिज्ञाप्यत्वस्य पर्वतादौ महानसत्वादि ज्ञाप्यत्वस्य चाप्रसिद्ध्या नाभावप्रत्यायनसम्भव इति ज्ञानप्रयोज्यत्वं ज्ञानजन्यतावच्छेदकत्वरूप समभिव्याहृतपर्वतादिविशेष्यतानिरूपित विधेयत्वञ्च विशकलित पञ्चम्यर्थः, विशिष्टलाभो ऽन्वयबलात् । एव चोक्तस्थले नञा विधेयतायां द्रव्यत्वमहानसत्वादिज्ञानप्रयोज्यत्वाभावः प्रत्याय्यते । तत्प्रयोज्यत्वं च प्रमेयत्वाद्यवच्छिन्नविधेयताया प्रसिद्धम् । न चैव 'पर्वतो वह्निमान् न धूमा' दित्यादेरपि प्रसङ्गः, धूमत्वाद्यवच्छिन्नविषयकज्ञानाप्रयोज्यतत्तद्वह्नित्वाद्यवच्छिन्नविधेयताया वह्न्यादावबाधितत्वादिति वाच्यम्; पर्वतादिविशेष्यतानिरूपितवह्नित्वाद्यवच्छिन्नविधेयतात्वावच्छेदेन विधेयताया नञा ऽभावान्वयबोधोपगमात् । यत्र वह्नित्वाद्यवच्छिन्नविधेयतात्वमन्वयितावच्छेदक तत्रैव तदवच्छेदेनेतरान्वयः सम्भवति । अत्र च वह्नित्वावच्छिन्नत्वाविशेषित विधेयतात्वमेव तथेति कथ तदवच्छेदेनाभावान्वय इति तु न शङ्क्यम्; पञ्चम्यार्थविधेयताया वह्न्यादौ वह्नित्वाद्यवच्छेदेनान्वयोपगमात्तदवच्छेदेन तदन्वये चावच्छेदकतद्रूपस्य तद्विशेषणांशे धर्मिपारतन्त्र्येण प्रकारत्वात् । प्रकृते स्वरूपसम्बन्धरूपवह्नित्वाद्यवच्छिन्नत्वेन वह्नित्वस्य विधेयतात्वस्यैवान्वयितावच्छेदकत्वात् । वह्न्यादिपदमेव तदवच्छिन्नविधेयताशालिज्ञानपरम् तदुत्तरमतुबादिप्रत्ययो विशेष्यतारूपसम्बन्धपर इति प्राचीनमते तु वह्नित्वाद्यवच्छिन्नविधेयतात्वस्यान्वयितावच्छेदकत्वमविवादमेव । विधेयतायास्तत्तदवच्छिन्नविधेयतात्वेन पञ्चम्या-

धर्मत्वं स्वीकरणीयम् । तेन 'अयं जानाति, आत्मत्वान्न द्रव्यत्वा' दित्यादौ विषयतासम्बन्धावच्छिन्नाया प्रकृतविशेष्यतानिरूपितज्ञानविधेयताया द्रव्यत्वादिरूपलिङ्गज्ञानप्रयोज्यत्वसत्त्वे ऽपि नावच्छेदकावच्छेदेनाभावान्वया-ऽयोग्यत्वम्, सम्बन्धविशेषावच्छिन्नविधेयतात्वरूपान्वयितावच्छेदकावच्छेदेना-भावबोधात् ।

एवं ज्ञानप्रयोज्यत्वप्रविष्टं ज्ञानमपि तत्तत्सम्बन्धावच्छिन्नप्रकारकत्वेन विशेषितमर्थः, तेन समवायेन हेतुत्वपरस्य 'अयं वह्निमान् तद्रूपान्न तु धूमा' दिति प्रयोगस्य नायोग्यता । वह्निविधेयताया संयोगेन धूमप्रकारकज्ञानप्रयोज्यत्वसत्त्वेऽपि समवायसम्बन्धावच्छिन्नतत्प्रकारताशालिज्ञानप्रयोज्यतात्वरूपान्वयितावच्छेदकावच्छिन्नाभावस्याबाधात् । सम्बन्धविशेषघटितधर्मस्यान्वयितावच्छेदकतया भाननियामकं तु तात्पर्यमेव; वह्न्यादिविधेयताया व्याप्त्यादिघटकाभावादिज्ञानप्रयोज्यत्वसत्त्वे ऽपि 'पर्वतो वह्निमानभावा' दित्यादिनं प्रयोगे, मुख्यविशेष्यतानिरूपितप्रकारताया एव निवेशनीयत्वादिति दिक् ।

'केन हेतुना, कस्मै हेतवे' इत्यादौ विभक्तिभिर्हेतुताविशिष्टे हेतुता बोधयितुं मशक्या पौनरुक्त्यादिति तु न शङ्क्यम् । हेतुशब्दस्य स्वरूपयोग्यपरत्वात्, विभक्तेः फलोपधानपरत्वात् । 'दण्डवान् रक्तदण्डवा' नितिवत् कार्यविशेषानुपरक्तहेतुताविशिष्टे कार्यविशेषोपरक्तहेतुताबोधे ऽनाकाङ्क्षताविरहाच्च । न चान्वययोग्यसम्भवे ऽपि हेतुशब्दप्रयोगवैयर्थ्यम्, फलोपधायकतालाभे स्वरूपयोग्यताया अर्थाल्लाभसम्भवादिति वाच्यम्; विभक्तेरन्यार्थताया अप्यन्यत्र दृष्टत्वाद्धेतुतापरत्वनिश्चयार्थं तत्प्रयोगात् ।

' सहार्थयोगे ऽपि साहित्यप्रतियोगिवाचकपदात् तृतीया, " पुत्रेण सहागत " इत्यादौ । अथ यदि सहशब्दार्थं समभिव्याहृतपदोपस्थाप्यक्रियासमानकालीनक्रियान्वयित्वम्, तदन्वयित्वं च समभिव्याहृतक्रियाबोधकपदेन क्रियाया यादृशः सम्बन्धः साहित्यान्वयिनि प्रत्याय्यते, तादृशतत्सम्बन्ध एव, स च 'पुत्रेण' इत्यादौ कर्तृत्वम्, 'दध्ना

सहौदनो भुज्यत ' इत्यादौ कर्मत्वादिः तृतीयार्थो ऽपि स एव सम्बन्धः, तथा च पुत्रकर्तृकागमनसमानकालीनागमनकर्तृत्व दधिकर्मक भोजनसमानकालीनभोजनकर्मत्वादिक पुरुषोदनादौ तत्र तत्र प्रतीयते इत्युच्यते ? तदा सहशब्देनैव तत्तत्क्रियाकर्तृत्वबोधने क्रियापदवैयर्थ्यम् । द्विधा क्रियाभानस्याऽनुपयुक्तत्वात् । क्रियान्वयिनि क्रियान्वयबोधस्योद्देश्यतावच्छेदकविधेययोरभेदेन निराकाङ्क्षतया ऽसम्भवाच्च । न च तत्तत्क्रियासमानकालीनत्वमात्र सहशब्दार्थं, तस्य च क्रियापदोपस्थापितक्रियायामेवान्वय इति क्रियापदसहितसहशब्दादेवोक्तविशिष्टार्थलाभ इति न कस्यापि वैयर्थ्यमिति वाच्यम्; एव सति ' पुत्रेण सहागत ' इत्यादौ सहशब्दार्थस्य क्रियापदार्थान्वयित्वेनान्यसापेक्षतया तेन सह पुत्रशब्दस्य समासासम्भवेन ' सपुत्र ' इत्यादिप्रयोगानुपपत्तेः । न चात्र समासे सहार्थस्य प्राधान्यम्, येनान्यसापेक्षत्वे ऽपि समासो भवेत् । किं तु बहुव्रीहित्वादन्यपदार्थप्राधान्यमेवेति चेन्न । समभिव्याहृतपदोपस्थाप्यक्रियाकाल एव सहशब्दार्थः । तस्य क्रियान्वयिनि नामार्थ एवान्वयः । तादृशकालविशिष्टे नामार्थे क्रियान्वये च क्रियायामपि तादृशकालावच्छिन्नत्व भासते । उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य व्युत्पत्तिसिद्धत्वात् । अतः क्रियाद्वयसमानकालीनत्वलाभ इति सामञ्जस्यात् ।

अथ वा आगमनसमानकालीनागमनादिकमेव सहशब्दार्थः । तस्य कर्तृत्वादिसम्बन्धेन पुरुषादावन्वयः । तादृशसम्बन्धेन तद्विशिष्टे च आगतः आगच्छतीत्यादिपदोपस्थाप्यागमनकर्तृत्वादीनामन्वये न व्युत्पत्तिविरोधः । विधेयस्योद्देश्यतावच्छेदकप्रकाराभेदाविरहात् । न च सहशब्दार्थान्वयबलादेव तत्क्रियाकर्तृत्वस्य पुरुषादौ लाभे प्रकारतयापि क्रियापदेन तत् प्रतिपादनमफलमिति तत्प्रयोगो व्यर्थ इति वाच्यम्; समभिव्याहृतपदेन तत्तत्क्रियाया अनुपस्थाने सहशब्देनापि तत्तत्क्रियाघटितसाहित्यस्य शक्यस्य बोधन न सम्भवतीति क्रियापदप्रयोगस्यावश्यकत्वात् । सहशब्दार्थक्रियायाः कर्तृत्वादिसम्बन्धेन नामार्थे ऽन्वयश्च न व्युत्पत्तिविरुद्धः । सहशब्दस्याऽधातुत्वात् प्रातिपदिकत्वेपि निपातत्वाच्च । न च

" प्रसीद शालप्रसुदारचेष्टमेका सुमित्रा सह लक्ष्मणेने " त्यादौ रामप्रसवलक्ष्मणप्रसवयोः समानकालीनत्वाभावात् क्रियाद्वयसमानकालीनतायाः सहशब्दार्थत्वासम्भव इति वाच्यम्, तत्रापि स्थूलकालघटितसमानकालीनत्वसत्त्वात् । न च कालत्वेनैव कालस्य तदर्थान्तर्भावे पुत्रागमनपूर्वभागान्तरे 'आगतो ऽय न पुत्रेण सहे' ति प्रयोगानुपपत्तिः । पुत्रागमनाधिकरणस्थूलकालवृत्त्यागमनकर्तृत्वसत्त्वेनान्वयितावच्छेदकरूपावच्छिन्नप्रतियोगिताकसाहित्याभावबाधादिति वाच्यम्, तत्र क्षणत्वेनैव कालस्य सहशब्दार्थे ऽन्तर्भावनीयत्वात् ।

एवं यत्र एककाले ऽपि विभिन्नस्थले भुञ्जानमधिकृत्य 'न सह भुङ्क्ते' इति प्रयुज्यते तत्रैकशालारूपभोजनाधारो ऽपि सहशब्दार्थे ऽन्तर्भावनीयः । अत एव " आलापाद्गात्रसंस्पर्शात् श्वासात्सहभोजना " दित्यादिना पतितभोजनसमानकालीनभोजनमात्रस्य पापजनकत्वं न बोध्यते तत्र एकगृहस्थैरपि एककालवत् विवक्षणात् । एवम्

" यानं योनिसम्बन्धं स्वाध्यायं सह भोजनम् ।
कुर्वन्‌ः पतति कुर्वाणः पतितेन न संशयः ॥ "

इत्यादौ एकदेशपात्रभोजनस्यैव सद्यः पातहेतुत्वं प्रतीयते । तत्र सहार्थस्यैव सहशब्देन विवक्षणात् ।

अथ नञर्थस्यैव सहार्थविशेष्यतयाऽन्वयोपगमे 'पुत्रेण सह नागच्छत्यय' मित्यादौ सहशब्दार्थपुत्रसाहित्याभाव एव पुत्रपदेन नञा बोध्यत इत्युपगन्तव्यम्; तच्च नोपपद्यते; तथा सत्याख्यातार्थोद्देश्यतावच्छेदकतयैव नञर्थभानस्योपगन्तव्यतया * प्रसज्यप्रतिषेधस्थले निषेधस्य तं प्रति प्राधान्येन भाननियमव्याघातात् । एवमनागच्छन्तमपि पुत्रमधिकृत्य तथा प्रयोगस्यायोग्यताप्रसङ्गाच्च । एतेन तत्र पर्युदासनञ्वत्क्रियायोगपरित्याग

* " प्रसज्य प्रतिषेधोऽयं क्रियया सह यत्र नञ् । पर्युदासस्स विज्ञेयो यत्रोत्तरपदेन नञ् ॥" इति कारिका बोध्या ॥

इत्युक्तावपि न प्रतीकारः । न च तत्रागमनाभावकाल एव पुत्रान्वयी सहशब्दार्थः । तथा च पुत्रागमनाभावकालावच्छिन्नपुरुषे वर्तमानकालावच्छिन्नाऽऽगमनकर्तृत्वाभावः प्रतीयत इति न काचिदनुपपत्तिरिति वाच्यम्; यत्राऽस्य पुत्र आयाति न त्वयं तत्रापि तादृशप्रयोगात्। तथा च पुत्रागमनकालावच्छिन्नस्याऽऽगमनकर्तृत्वाभावस्य सत्त्वे ऽपि पुत्रागमनाभावकालावच्छिन्नपुरुषे वर्तमानकालावच्छिन्नागमनकर्तृत्वाभावस्यासत्त्वेनायोग्यतापातात्; मैवम्। सहशब्दार्थस्तत्क्रियाकालः क्वचित् क्रियान्वयिनि प्रथमान्तपदार्थे ऽन्वेति । क्वचिच्च समभिव्याहृतक्रियायाम् । 'सपुत्र आगच्छती' त्यत्र पुत्रेण सहागच्छति य इति विग्रहात् प्रथमान्तान्यपदार्थ एव पुत्रागमनकालान्वयो, न तु क्रियायामिति न पूर्वोक्त समासानुपपत्तिः । न चाऽन्यपदार्थपुरुषालाभः । न चैव समासलभ्यस्य पुत्रागमनकालावच्छिन्नस्य पुंसो विग्रहवाक्येनापि प्रतिपादनाद्बहुव्रीहिमात्रस्यैव नित्यसमासत्वमिति भज्येतेति वाच्यम्, बहुव्रीहिमात्रस्य तथात्वानियमात्। प्रथमान्तानुपस्थाप्यान्यपदार्थबोधकबहुव्रीहेरेव तत्त्वाभ्युपगमात् । अत्र चान्यपदार्थस्य पुरुषस्य प्रथमान्तोपस्थाप्यत्वात् । न च प्रथमार्थे ऽन्यपदार्थे बोधकबहुव्रीहिरेवाऽसाधु ; तदुक्तं "प्रथमार्थे न भवति-'वृष्टे देवे गत' इति " इति वाच्यम्, "अनेक" मित्याद्यनुशिष्टबहुव्रीहावेव तन्नियमात् । अत्र च सूत्रान्तरेणैव तद्विधानात् । अत एव तदारम्भो ऽपि । 'पुत्रेण सह नागच्छती' त्यादौ च क्रियायामेव तादृशसहार्थान्वय इति पुत्रागमनकालीनागमनकर्तृत्वाभाव प्रथमान्तार्थे प्रतीयत इति सर्वं सुस्थम् ।

तथाऽपि 'सपुत्रो नागच्छती' त्यादौ पूर्वोक्तरित्याऽनुपपत्ति र्द्रष्टव्या । भारमनुद्वहन्तं पुत्रमनुद्वहन्त्यामपि गर्दभ्याम्, "सहैव दशभि पुत्रै" रित्यादौ वर्तमानेत्यध्याहाराद्वर्तमानत्वक्रियामादायैव साहित्यबोध इति वदन्ति ।

'इत्थम्भूतलक्षण' इत्यनेन लक्षणवाचिपदात्तृतीया ऽनुशिष्यते । लक्षणत्व च व्यावर्तकत्वम्, तच्च (विशेष्यवृत्तित्वे सति) विशेष्यतावच्छेदकसमानाधिकरणाभावप्रतियोगित्वम् । तदाश्रयश्च धर्मो द्विविध, विशेषणमुपलक्षण च ।

विद्यमान सद्व्यावर्तकं विशेषणम्, पुरुषादौ वर्त्तमानकालावच्छेदेन विद्यमानो दण्डादि । अविद्यमान सत् व्यावर्तकमुपलक्षणम्, तापसादे कालान्तरीणजटादिकम् । विशेषणस्य सम्बन्धो मतुबादिभि प्रत्याय्यते । अस्मिन् अस्तीत्यर्थे विहितानां वर्त्तमानसम्बन्धार्थकत्वात् । अतो 'जटाभिस्तापस' इत्यादावविद्यमानजटादे सम्बन्धविवक्षया मतुबाद्यनवकाशात् तत्र तृतीयैव । तया च विद्यमानस्येव अविद्यमानस्यापि प्रत्यायनात् । विशेषणवाचपदादपि तृतीया । यथा "ज्ञायमानत्वेन लिङ्ग करण" मित्यादौ ।

अथ तत्र ज्ञायमानत्वादिवैशिष्ट्य तृतीयया लिङ्गादौ न प्रत्याय्यते, अपि तु पदार्थैकदेशे करणत्वादावेव तदवच्छिन्नत्वमिति चेत्, तथापि सा विशेषणतृतीयैव, अनुशासनान्तराभावात् । वस्तुतो लिङ्गादौ ज्ञायमानत्वादिवैशिष्ट्यबोधनेऽपि सम्बन्धविधया करणत्वज्ञायमानत्वयोरवच्छेद्यावच्छेदकभावभानसम्भवादेकदेशान्वयस्वीकारोऽनुचित । न च सम्बन्धविधया करणत्व एकदेशेऽवच्छिन्नत्वभानेऽप्येकदेशान्वयमौत्यमिति वाच्यम्, करणभेदरूपे करणत्वे करणस्य सम्बन्धविधया भासमाने ज्ञायमानत्वावच्छिन्नत्वस्यावच्छेदकतया भानोपगमेनैकदेशान्वय विनाप्यवच्छेद्यावच्छेदकभावभानात् । अथ 'दण्डवानयमासीत्, दण्डी गतवा' नित्यादौ दण्डस्यातीततया विशेषणत्वासम्भवान्मतुबाद्यनुपपत्तिरिति चेत्, न, प्रकृतशब्दप्रयोगाधिकरणकालावच्छिन्नस्येव विधेयान्तरसमभिव्याहारस्थल तदधिकरणकालावच्छिन्नसम्बन्धस्यापि मतुबादिना प्रत्यायनात् । तत्रातीतकालसत्वादिरूपविधेयाधिकरणातीतादिकालावच्छिन्नसम्बन्धस्यैव मतुबाद्यर्थत्वात् । अविद्यमानोऽपि दण्डादिर्धर्मान्तरधर्म्यसमानकालीनतया धर्मान्तरा वच्छिन्नं विशेषणम् । तत्प्रकारेण भासमाने धर्मान्तरान्वयबोधो विशिष्टवैशिष्ट्यबोध इत्युच्यते । नत्तसाधन्येऽप्युपलक्षणम् । न वा तादृशबोधस्तदुपलक्षितान्वयबोध इत्युच्यते । क्वचिद्विधेयान्तरसमानकालीनमपि विशेषण तदन्वयि उपलक्षणमुच्यते । यथा 'रूपवान् रसवा' नित्यादौ रूपादिक रसादौ । 'सास्नादिमान् गोपदवाच्य' इत्यादौ सास्नादिक गवादिपदवाच्ये । क्वचिद्धर्मिसम्बद्धधर्मान्तरसम्बन्ध्यपि धर्मान्तरसम्बन्धितानवच्छेदकतया धर्मान्तरसम्बन्ध्युपलक्षणम्, अतो दण्डपुरुषादिन्यायसमूहालम्बनबोधो दण्डाद्युपलक्षितपुरुषादिविषयको न तु

विशिष्टविषयक इत्युच्यते । विशेष्यसम्बद्धासम्बध्यपि तत्सम्बन्धितावच्छेदकतया तद्वति विशेषणम् । अत एव सत्ताविशिष्टमद्रव्यादिज्ञाने सत्तादेर्विषयत्वमनङ्गीकुर्वता प्राभाकराणां प्राचीननैयायिकानां च मते तटस्थज्ञानविषयतैव विषयतावच्छेदकत्वात्सत्तादेरप्रकारस्य ज्ञानविषयविशेषणत्वम् । अत एव द्वित्वनाशकालीनायां द्वे द्रव्ये इति बुद्धौ न द्वित्वविषयकत्वमपि तु द्वित्वविशिष्टविषयकत्वमेव, द्वित्वरूपविशेषणधीजन्यत्वादित्याचार्याः ।

एवमप्रतियोगित्वाविशेषेऽपि घटसामान्याभावादिप्रतियोगिनि घटत्वादिकं विशेषणम्, नीलादिकमुपलक्षणमित्युच्यते । क्वचित् विद्यमानमप्यतद्व्यावृत्तिन्यूनाधिकवृत्तितया तत्र न विशेषणमित्युच्यते, किं तूपलक्षणम्, यथा विद्यमानापि जटा तापस उपलक्षणं, न तूपलक्ष्यतावच्छेदकशमदमादिवद्विशेषणमित्यलम् । क्वचिदविशेषणस्यापि सम्बन्धो मत्वर्थीयेन बाध्यते, 'घटोऽयं विनाशी' त्यादिप्रयोगदर्शनादिति दीधितिकृत, तदसत्, आवश्यकार्थधातूत्तरणिनिप्रत्ययेनापि तत्र विनाशिपदव्युत्पत्तेरिति ।

इति तृतीया ।



# अथ चतुर्थी ।



"ब्राह्मणाय गां ददाती" त्यादौ सम्प्रदानचतुर्थ्या ब्राह्मणादिसम्प्रदानकत्वं दानादौ बोध्यते । सम्प्रदानत्वं च मुख्यभाक्तसाधारणं क्रियाकर्मसम्बन्धितया कर्त्रभिप्रेतत्वम् । क्रियाकर्मत्वं क्रियाजन्यफलशालित्वं, तद्वता सम्बन्धस्तन्निष्ठफलभागित्वमेव । तथा च क्रियाजन्यफलभागितया कर्तुरिच्छाविषयत्वे पर्यवसन्नम् । "कर्मणा यमभिप्रैती" त्यस्य कर्मणा यमभिसम्बद्धुमिच्छतीति शाब्दिकैर्विवरणादुक्तस्थले त्यागरूपक्रियाजन्यगोनिष्ठस्वत्वभागितया दातुरिच्छाविषयो ब्राह्मण इति तस्य सम्प्रदानत्वम् ।

अथ निरुक्तस्य सम्प्रदानत्वस्य कर्मत्वस्याविशेषः । "कर्तुरीप्सिते" ति सूत्रेण कर्तुः क्रियया व्याप्तुमिष्टस्य कर्मसंज्ञाविधानात् । क्रियया व्याप्तुमिष्टत्वमपि हि क्रियाजन्यफलभागितयेच्छाविषयत्वमेव । न च तथायुक्तमित्यनेन तद्भागितयाऽनभिप्रेतस्यापि तदाश्रयस्य तत्संज्ञाविधानात्, कर्मत्वं क्रियाजन्यफलशालित्वमेव न त्विच्छागर्भम्, सम्प्रदानत्वं त्विच्छागर्भम्, अतो भेद इति वाच्यम्, कर्मत्वस्येच्छाऽघटितत्वे सूत्रभेदवैयर्थ्यापत्तेः । न च तदाश्रयत्वेनानभिप्रेतस्यापि कर्मत्वे तत्साधारणक्रियाजन्यफलशालितयेष्टस्यापि ग्रामादेः कर्मतोपपत्ताविच्छाघटिततत्सूत्रवैयर्थ्यमेवेति वाच्यम्, इच्छाऽघटितस्य निरुक्तरूपस्य यत्र नाभस्तत्र तादृशरूपमपि कर्म प्रत्ययेनप्रतिपाद्यत इत्येतत्प्रतिपादनाय सूत्रद्वयप्रणयनात् । अत एव यत्नौदनस्य गळाध संयोगेच्छया यो व्यापारस्ततो विषादेरपि तत्संयोगात्तत्र विषादौ क्रियाजन्यफलशालित्वाबाधेऽपि तेन रूपेणेच्छाविषयत्वाभावो ऽबाधित, तत्र 'विषमनेन न भुज्यते' इति प्रयोगोपपत्तिः, इच्छाघटितकर्मत्वतात्पर्येण च 'दैवाद्विषं भुज्यते' इति प्रयोगस्य चोपपत्तिः । न च धात्वर्थतावच्छेदकफलशालित्वेनोद्देश्यत्वं कर्मत्वम्, तदनवच्छेदकफलशालित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति विशेषः; स्वस्वत्वध्वंसावच्छिन्नत्याग एव ददात्यर्थो न तु परस्वत्वरूपफलावच्छिन्नोऽपीति वाच्यम्, उपेक्षायामपि ददातेर्मुख्यार्थतापत्तेः ।

मैवम्– फलाश्रयतयेप्सितत्वमेव हि कर्मत्वम्, फलसम्बन्धितयेप्सितत्वं सम्प्रदानत्वम्। ब्राह्मणादिश्च न त्यागजन्यस्वत्वाश्रयतया दातुरिष्ट, अपि तु तन्निरूपकतयैव, अतो न तस्य कर्मता।

न चाश्रयत्वमपि सम्बन्धविशेष इति गवादेरपि सम्प्रदानत्व दुर्वारम्, आश्रयत्वेनाभिप्रायस्थले कर्मसंज्ञया बाधादन्य एव हि सम्बन्ध. सम्प्रदानता घटक इति यद्युच्येत, तदा 'वृक्षायोदकमासिञ्चति' 'पत्ये शेते' इत्यादौ सेकजन्यजलसंयोगादावनजन्यप्रीत्याद्याश्रयतयाभिप्रेतस्य वृक्षपत्यादेः सम्प्रदानत्वानुपपत्तिरिति वाच्यम्, धात्वर्थतावच्छेदकफलाश्रयत्वभिन्नफलसम्बन्धस्य सम्प्रदानत्वशरीरे निवेशेन सामञ्जस्यात्। 'वृक्षायोदकमासिञ्चती' त्यादौ द्रव द्रव्यक्रियानुकूलव्यापारो धात्वर्थं। सम्प्रदानतानिर्वाहकसंयोगश्च न तादृश धात्वर्थतावच्छेदक इति तदाश्रयत्व निरुक्ताश्रयताभिन्नमेवेति तत्प्रकारकाभिप्रायविषयवृक्षादे सम्प्रदानतानिर्वाहात्।

न च 'पत्ये शेत' इत्यादौ धात्वर्थतावच्छेदकफलाप्रसिद्धया तदनुपपत्ति। भेदप्रतियोगिप्रविष्टधात्वर्थतावच्छेदके फलत्वानिवेशेन प्रसिद्धिसम्भवात्। एव च 'ब्राह्मणाय' त्यादौ ब्राह्मणनिरूपितत्वेनेच्छाविषययोनिष्ठस्वत्वजनकत्यागकर्तेति बोध। निरूपितत्वेन कर्तुरिच्छाविषयत्व द्वितीयान्तार्थगोवृत्तित्वान्वयिधात्वर्थतावच्छेदकस्वत्वान्वयि चतुर्थ्यर्थ। स्वत्वजनकत्यागश्च ददात्यर्थ।

अत्र केचित्— ददातियोगे धात्वर्थतावच्छेदकस्वत्वनिरूपकत्वमेव सम्प्रदानत्वम्, तदेव च मुख्यम्। तथा च तत्र निरूपितत्वमात्र चतुर्थ्यर्थो धात्वर्थतावच्छेदकस्वत्वेऽन्वेति। अत एव श्राद्धस्य पितृपेक्षया यागत्वमेव, दानत्व तु ब्राह्मणापेक्षयेत्याहुः शूल्पाणि। तत्र स्वत्वमानेऽपि पितृणा स्वत्वानुपत्त्या सम्प्रदानत्वासम्भवात्। स्वत्वभागित्वेनोद्देश्यत्व यदि सम्प्रदानत्व स्यात्तदा पितृणामपि तथात्वापत्ते, पितृपक्षयापि दानत्व स्यात्। न हि श्राद्धे पितृणा स्वत्वभागित्वेन नोद्देश्यत्वम्। 'पितरस्तेऽयं स्वधे' त्यादि श्राद्धरूपत्यागाभिलापकस्वधार्थे त्यागे चतुर्थ्या स्वत्वभागित्वेन पित्रादरुद्देश्यत्वबोधकत्वात्। स्वत्वभागित्वेनोद्देश्यस्यापि पित्रादे स्वीकाराभावान्न स्वत्व, ब्राह्मणाना तत्रानु

देश्यत्वेऽपि स्वत्वं प्रतिपादितो जायते । अनुद्देश्यत्वेऽपि च सम्प्रदानत्वमुप पादितमेव । पितॄणामिव ब्राह्मणानामपि च स्वत्वभागित्वेनोद्देश्यत्वमविरुद्धम् । धात्वर्थतानवच्छेदकफलभागितया यत्र सम्प्रदानत्व 'वृक्षायोदक सिञ्चति पत्ये शेते' इत्यादौ, तत्रोद्देश्यत्वांशानिवेश आवश्यकः । यत्रान्योद्देशेन क्षिप्तजलस्य दैवाद्वृक्षसंयोगोऽन्योद्देशेन शयनादितश्च पत्यादेः फलसम्बन्धस्तत्र तथा प्रयोगाविरहात् । अत एव तत्र चतुर्थ्यर्थः स्वनिष्ठतया कर्त्रभिप्रेत तत्तत्फल प्रति जनकत्वम् । तच्च सेकादिक्रियायामन्वेति । भाक्त च तत्र सम्प्रदान त्वम्, उद्देश्यत्वागर्भसम्प्रदानत्व एव लाघवाच्छक्तेरितरत्र लक्षणाया अभ्यु पगमात् । "पितृभ्यो दद्या" दित्यादावनिराकर्तृसम्प्रदाने चतुर्थी । तत्र च तत्र त्यागजन्यस्वत्वभागितयोद्देश्यत्वमेव ।

अथ जनान्तरस्य वृक्षादिनिष्ठजलसंयोगादिरिच्छाविषयोऽन्येन च जनेना न्योद्देशेन क्षिप्तजलादेर्वृक्षादिसंयोगस्तत्रापि 'वृक्षायोदकमासिञ्चति जन' इत्यादि प्रयोगापत्तिः, तत्तद्व्यक्तित्वस्य पदेनानुपस्थापनात् । तेन रूपेण विशेष्यभूतकर्तृ व्यक्तीनामिच्छांशे भानासम्भवादुपस्थितजनत्वावच्छिन्नेच्छाविषयत्वस्य च वृक्ष संयोगादावबाधात् । एवं तदीयकालान्तरीणेच्छामादायाप्यतिप्रसङ्गतादवस्थ्य मिति चेत्; न, वृक्षादिनिष्ठत्वेनेच्छैव हि चतुर्थ्यन्तार्थः; तस्याश्च स्वविषयसंयो गादिजनकत्वस्वजन्यत्वोभयसम्बन्धेन सेकादिक्रियायामन्वयः । उक्तस्थले च यत्क्रियाऽन्यस्य जलसंयोगादिर्वृक्षादौ जन्यते तत्र कालान्तरीणपुरुषान्तरीणे च्छायाः स्वविषयसंयोगादिजनकत्वसम्बन्धसत्त्वेऽपि स्वजन्यत्वाभावाशोभयसम्ब न्धेनेच्छावैशिष्ट्यमित्ययोग्यतैवेति वदन्ति ।

अत्रेद बोध्यम्— उद्देश्यत्वागर्भत्यागजन्यस्वत्वभागित्वस्य ददातिसम्प्रदा नतारूपत्वे मैत्रोद्देशेन यद्दत्तं तत्र तादृशदानेन 'दम्पत्योर्मध्यग धन' मित्यतस्त त्पत्न्या अपि स्वत्वस्य प्रामाणिकतया सम्प्रदानत्वेन मैत्रपत्न्यै दत्तमिति व्यवहारापत्तेः । नच पत्युः स्वत्वमेव पत्नीस्वत्व जनयति, न तु तत्त्यागोऽपीति वाच्यम्; स्वत्ववति स्वत्वान्तरानुत्पत्तेः । तथा च सर्वत्रैवोद्देश्यत्वान्तर्भावः । भवतु च 'पितृभ्यो दद्या' दित्यत्रापि मुख्यमेव सम्प्रदानत्व चतुर्थ्यर्थं, अस्तु वा स्वस्वत्वेच्छाधीनतत्कृत्वमेव मुख्यदानरूपक्रियासम्प्रदानत्व, तथा च पूर्वोक्त

स्थले स्त्रियाः सम्बन्धसत्त्वेऽपि नेच्छाया. स्त्रीविशेषितस्वत्वविषयकत्वम्, अपितु पतिविशेषितस्वत्वविषयकत्वमेवेति पितृस्वत्वाप्रसिद्ध्या न तेषां सम्प्रदानत्वम्। चतुर्थ्यर्थो धात्वर्थतावच्छेदकस्वत्वान्वयिनिरूपितत्वम्, स्वत्वस्य च स्वत्वध्वंसेच्छारूपे त्यागे जनकत्वस्येच्छाधीनत्वोभये सम्बन्ध. । तल्लाभश्च विशिष्टस्य धातुवाच्यतामते शक्तिलभ्य एव, तदन्तर्भावेणैव शक्त्युपगमात् । फलव्यापारयोः पृथक् धात्वर्थतामते आकाङ्क्षाबलादेव तादृश सम्बन्धलाभ । पितृभ्यो दद्यादित्यत्र च धात्वर्थान्तर्गतस्वत्वे चतुर्थ्या पित्रा द्यन्वयी निरूपितत्वरूपो मुख्योऽर्थो बाधितत्वान्न प्रत्याय्यते, अपि तु निरूपितत्वेनेच्छाविषयत्वरूपो लक्ष्यार्थ एव । ददातिस्तु तत्र मुख्य एव, श्राद्धस्यापि ब्राह्मणापेक्षया दानत्वात् । श्राद्धे ब्राह्मणस्य सम्प्रदानतानिर्वाहाय 'अस्ति चोद्दे श्यतापि ब्राह्मणस्ये' त्यादिकमभिदधानस्य शूलपाणेरपि सम्प्रदानत्वशरीर उद्दे श्यत्वाद्यापरित्यागे निर्भरोऽवगम्यते । कर्मणा यमभिप्रैतीति भगवतो महर्षे. पाणिनेरपि सम्मतोऽयमर्थ । 'शम्भवे मय ददाती'त्यादौ जनयतीति भावार्थः । एव चोत्पादनव्यापाररूपे धात्वर्थे नियाफलशालि भयरूप कर्मेति । तद्योगितयो द्देश्यत्वात् शम्भादे. सम्प्रदानत्वम् ।

युद्धाय सन्नह्यतीत्यादौ सन्नहनादिक्रियाजन्यफलाश्रयत्वाद्युद्धादेर्न सम्प्रदानतानिर्वाह इति नेय सम्प्रदानचतुर्थी, अपि त्वेधानाहर्तुं प्रजतीत्यर्थे एधेभ्यो व्रजतीत्यत्रेव युद्ध कर्तुं योद्धु वा सन्नह्यतीत्यर्थविवक्षया क्रियार्थोपपदेति सूत्रान्तरेण । तस्य च स्थानिनोऽश्रूयमाणस्य क्रियार्थोपपदस्य तुमुन्नन्तधातोः कर्मणि स्वार्थनिष्ठकर्मत्वे विवक्षिते स्वोत्तर चतुर्थीत्यर्थ. । तथा चाहरणसहनाद्युद्देश्यफल तादृशचतुर्थ्यर्थ इत्यवधेयम् । अथ 'यदग्नये च प्रजापतये च साय जुहोती'त्यादावग्न्यादेरिव "सर्वभूतेभ्य उत्सृज्य मयैतज्जल मूर्छित" मित्यादौ सर्वप्राणिनामिव "पशुना रुद्र यजत" इत्यादावपि त्यागविशेषरूपक्रियाया रुद्रादेरनिराकर्तृसम्प्रदानतया चतुर्थी स्यादिति चेत्, न, गौरवितप्रीतिहेतुक्रिया यजर्थ । तदर्थतावच्छेदकफल प्रीति, तदाश्रयतया रुद्रस्य विवक्षितत्वात्कर्मसंज्ञकत्वेन द्वितीयैव न तु चतुर्थी । त्यागात्मकतादृश क्रियया निरुक्तानिराकर्तृसम्प्रदानत्वे सत्यपि तदविवक्षणात् । प्रीतिभागि

तथोद्देश्यत्वरूपसंप्रदानत्वविवक्षाया च रुद्राय यजत इत्यपि प्रयोग । उभ-
यविवक्षायां परत्वेन कर्मसंज्ञया बाधात् द्वितीयैव । जुहोत्युत्सृजत्यादेः
प्रीतिरूपफलावच्छिन्नत्यागबोधकतया त्यागरूपक्रियाजन्यप्रीतिभागिनो देवता-
देस्तत्कर्मताविरहान्नैव प्रजापतिं जुहोति भूतान्युत्सृजतीत्यादय प्रयोगाः ।

रजकस्य वस्त्रं ददातीत्यत्र ददातिर्न त्यागार्थक, अपि तु परायत्तीक-
रणार्थको गौणः । तदायत्तीकरण च प्रकृते तत्कर्तृकनिर्णेजनेच्छाप्रका-
शको व्यापारः । तदेकदेशे कर्तृत्वे रजकस्य सम्बन्धिविवक्षाया शैषिकी
षष्ठी । हन्तुः पृष्ठ ददातीत्यत्र तत्कर्तृकताडनानुमतिप्रकाशकव्यापार एव
ददात्यर्थः । तदेकदेशे कर्तृत्वे हन्तु सम्बन्धिविवक्षाया षष्ठी । एव
संवाहकस्य चरण ददातीत्यादावूहनीयम् ।

नारदाय रोचते कलह इत्यादौ रुच्यर्थानामित्यनुशासनेन प्रीतिजनकता-
रूपरुच्यर्थघटकप्रीतिभागिनः सम्प्रदानसंज्ञा विहिता, तत्र चतुर्थ्यर्थ आश्रि-
तत्व प्रीतावन्वेति । तादृशक्रियाश्रयतया कलहादेः कर्तृता ।

पुष्पेभ्यः स्पृहयतीत्यत्र स्पृहाविषयपुष्पस्य स्पृहेरीप्सित इत्यनेन सम्प्र-
दानत्वाच्चतुर्थी । तदर्थो विषयित्वम्, तस्येच्छारूपक्रियायामन्वयः ।

पुत्राय क्रुद्ध्यतीत्यत्र 'क्रुधद्रुह' इत्यादिसूत्रेण कर्मणः सम्प्रदानसंज्ञा ।
तत्रापि चतुर्थ्यर्थो विषयित्व कोपेऽन्वेति । क्रोधस्य द्वेषविशेषात्मकतया
भक्तिश्रद्धादिवत् ज्ञानविशेषरूपत्वेन वा सविषयकत्वात् । एव द्रुह्यते
इत्यतीत्यादावपि तेनैव सम्प्रदानत्वम्। द्रोहोऽपचिकीर्षा, अहितेच्छेति यावत् ।
अहितभागितया या इच्छाविषयता तन्निरूपकत्व चतुर्थ्यर्थ इच्छान्वयी,
अहितान्वय्याधेयत्व वा । अतः कर्मणेत्यादिसूत्रस्याविषयः । ईर्ष्या अक्षा-
न्तिः, परोत्कर्षासहिष्णुता, परोत्कर्षगोचरो द्वेष इति तद्विषयस्य
परस्य तेनैव सम्प्रदानता । असूया गुणिनि दोषाविष्करणम् । तद्विषयस्या-
प्यनेन सम्प्रदानता, विषयताविशेषस्तत्र चतुर्थ्यर्थः ।

विप्राय शत धारयतीत्यादौ 'धारेरुत्तमर्ण' इत्यनेन धनिकविप्रादेः
सम्प्रदानता । अथ कोऽयं धार्यर्थः ? न तावद् द्रव्यान्तरदानमङ्गीकृत्य

परदत्तद्रव्यादानम् ; तथा सत्यादानात्परतो धारयतीति प्रयोगानुपपत्तेः । आदानस्यावर्तमानत्वात् । न चेष्टापत्तिः । अविशोधने तथा प्रयोगात् । नापि तादृशादानध्वंस । अधमर्णस्य तदकर्तृत्वात् । नचादानमिच्छा विशेष , तद्वत पुंसस्तदाश्रयतया तत्कर्तृत्ववत्तद्ध्वंसाश्रयतया तत्कर्तृत्वमप्यक्षतमिति वाच्यम् , एवमप्यादानध्वंसस्य परिशोधनोत्तरमपि सत्त्वेन तदानीमपि धारयतीति प्रयोगापत्त । न च परिशोधनप्रागभावविशिष्टो निरुक्तादानध्वंसस्तथा, ऋणीकृतद्रव्यान्तरपरिशोधनप्रागभावदशाया परिशुद्धमृणमादाय धारयतीत्यापत्ते । न च स्वप्रतियोग्यादाननिर्वाहकाङ्गीकारविषयद्रव्यदानप्रागभावविशिष्टादानध्वंसस्तथा , यदृण परिशोधित तावद्द्रव्य च पुनर्गृहीत्वा पुन परिशोधनीय तदादाय धारयतीत्यापत्तेः, तदीयपरिशोधनस्यापि स्वकर्तव्यतया पूर्वाभ्युपगमविषयत्वात् , तत्प्रागभावस्य पूर्वपरिगृहीतशोधनोत्तरमपि सत्त्वात् । न च स्वप्रतियोग्यादाननिर्वाहकाभ्युपगमविषयीभूत यद्द्रव्यदान एकक्षणावच्छिन्नैकाधिकरणवृत्तित्वसम्बन्धेन तद्विशिष्टान्यप्रागभावविशिष्टादानध्वंसस्तथा, उक्तस्थले चोदीच्यपरिशोधनप्रागभावप्रथमादानप्रयोजकाभ्युपगमविषयपरिशोधनविशिष्ट , प्रथमपरिशोधनप्रागभावश्च प्रथमपरिशोधनोत्तर नास्त्येवेति नोक्तातिप्रसङ्ग इति वाच्यम् , एवमपि यस्य ऋणस्य परिशोधनमप्रसिद्ध तदादानपूर्वकालीनस्य तावद्द्रव्य मया तुभ्य देयमित्यभ्युपगमस्य तदुत्तमर्णोद्देश्यकत्वेन स्वकर्तृकान्योद्देश्यकतावद्द्रव्यदानमेव विषय इत्युपेयम् , तदुत्तमर्णोद्देश्यकतत्कर्तृकतावद्द्रव्यदानस्याप्रसिद्धत्वात् । तथा चान्योद्देश्यकतावद्द्रव्यदानोत्तर तदभ्युपगमविषयद्रव्यदानविशिष्टा यत्प्रागभावासत्त्वाद्धारयतीति व्यवहारानुपपत्तिरिति चेत् ।

अत्राहु — ऋणग्रहणेनाधमर्णनिष्ठः परिशोधननाश्योऽदृष्टविशेषो जन्यते । तेनैवादृष्टेन ऋणमपरिशोध्य मृतस्य नरकादिक उत्पद्यते । तथा च द्रव्यान्तरदानाभ्युपगमपूर्वकपरदत्तद्रव्यादानजन्यादृष्टविशेषवत्त्वमेव धारयतेरर्थ । तद्घटकदानान्वयि कर्तृत्व तत्र चतुर्थ्यर्थ. । न च ऋणाशोधनमेव दुरदृष्टजनकम् , उपपातकमध्ये तस्य परिगणनात् , न तु ऋणादानम् , तस्य तथात्वे मानाभावादिति वाच्यम् , ऋणादानस्य दुरदृष्टविशेषजनकत्वेऽपि परिशोधनेन तस्य नाश इति बोधनायापरिशोधनस्य

नरकरूपफलप्रयोजकत्वाभिप्रायेण उपपातकमध्ये परिगणनो पपत्तेः, ऋणमादायापरिशोधकस्य नरकभागितया ऋणादानस्यैव दुरदृष्ट जनकतायाः कल्पनीयत्वात्, गृहीतऋणापरिशोधनापेक्षया लघुत्वात्, अपरिशोधनस्य हेतुत्वे परिशोधनपूर्वकालेऽप्यपरिशोधनसत्त्वे दुरदृष्टोत्पत्तेराव श्यकतया परिशोधनस्य तन्नाशकतया आवश्यकतयाऽस्माकं तत्कल्पनाधिक्य विरहात्, परिशोधनोत्तरकाल परिशोधनाभावसत्त्वेन तदबलाद्दुरदृष्टवार णाय परिशोधनध्वंसस्य प्रतिबन्धकतायाः कल्पनीयतया भवन्मते गौरवाच्च। न च परिशोधनानुत्तरमरणमेव पापजनकं वाच्यम्, तथा च नोक्तो तिप्रसङ्ग इति वाच्यम्, गृहीतद्रव्यमपरिशोध्य मरणस्थले तद्द्रव्यपरिशोध नाप्रसिद्ध्या तदनुत्तरत्वादिघटितरूपेण हेतुतायाः कल्पयितुमशक्यत्वादित्यलम्। 'यूपाय दारु' इत्यादौ न सम्प्रदानचतुर्थी, अपि तु तादर्थ्यार्थसूत्रान्तरेण। तादर्थ्ये च स एवार्थः प्रयोजनं यस्य तत्त्वम्। समभिव्याहृतपदार्थे ताद र्थ्यविवक्षायां तद्वाचकाच्चतुर्थीति तदर्थः। प्रयोजनत्वं चात्र न जन्य त्वम्, दुःखादेः पापादिजन्यतया दुःखाय पापमित्याद्यापत्तेः, नापि जन्यत्वे च्छाविषयत्वम्, स्वर्गादेः पुण्यादिजन्यत्वेनेच्छाविषयत्वात् स्वर्गाय पुण्य मित्याद्यापत्तेः, नचेष्टापत्तिः, तथा सति पक्तुं व्रजतीत्यर्थे पाकाय व्रजतीति निर्वाहाय तुमर्थेति सूत्रप्रणयनवैयर्थ्यात्, पाकादेर्निरुक्तव्रजनाद्यर्थतयैव तद्वाच कपदाच्चतुर्थ्युपपत्तेः, अपि तु समभिव्याहृतपदार्थनिष्ठव्यापारेच्छानुकूलेच्छा विषयत्वं न प्रयोजनं न तत्प्रयोजनफलरूपतादर्थ्यं यत्तदिच्छाधीनेच्छाविषयव्यापा राश्रयत्वं, दारुणो यूपेच्छाधीनेच्छाविषयतक्षणादिरूपव्यापारवत्तया यूपार्थकत्व मिति तद्विवक्षया यूपपदाच्चतुर्थी। इच्छाधीनेच्छाविषयव्यापारवत्त्वं चतुर्थ्यर्थः। प्रथमेच्छायां यूपादेः प्रकृत्यर्थस्य विषयितयाऽन्वयः। एवं रन्धनाय स्थाली त्यादावूह्यम्। तत्र तादृशव्यापारस्तण्डुलधारणादि। पुण्यादेः स्वर्गेच्छाधीनेच्छा विषयव्यापाराश्रयत्वं न स्वर्गाय पुण्यमित्यादिप्रयोगः। व्रजनादेः पाकानु कूलव्यापाराश्रयतया न पाकाय व्रजतीत्यादावनेन चतुर्थीति तुमर्थाच्चेत्यादि सूत्रम्। तदर्थश्च तुमन्तस्थधातुना यादृशोऽर्थः प्रत्याय्यते, समभिव्याहृतक्रिया न्वितत्तदर्थपरात्तद्धातुघटितभाववाचकाच्चतुर्थीति। पक्तुं व्रजतीत्यत्र तुमुनैव

भजने पाकसमानकर्तृकत्वघटितपाकविषयेच्छाधीनेच्छाविषयत्वं बोध्यते । तुमुन्ण्वुलाविति सूत्रेण समभिव्याहृतक्रियायां प्रकृतक्रियासमानकर्तृकत्वघटिततदिच्छाधीनेच्छाविषयत्वरूपतदर्थकत्वेन विवक्षितायां तुमुन्ण्वुलोर्विधानात् । एतत्सूत्रस्यापि स्वर्गाय पुण्यमित्यादिर्न विषय इति बोऽसाधुरेव ।

एधानाहर्तुं व्रजतीत्यर्थे एधेभ्यो व्रजतीत्यत्र एधस्य न व्रजनप्रयोजनत्वम्; सिद्धतया व्रजनेच्छानुकूलेच्छाया अविषयत्वात्, व्रजनस्य तदनुकूलव्यापाराभावत्वाच्चेति न तादर्थ्यं इति सूत्रस्य प्रवृत्तिः, नापि तुमर्थादित्यादेः, एधपदस्य क्रियारूपभाववचनत्वाभावादिति तत्र क्रियार्थोपपदस्येति चतुर्थी । तदर्थश्च क्रियार्थोपपदस्तुमन्तो यो धातुरप्रयुक्तस्य तस्य यत्कर्म तत्प्रयोगं विना तदर्थकर्मतया यद्विवक्षितं तद्वाचकाच्चतुर्थीति । तत्र चाहर्तुमिति तुमन्तार्थः समभिव्याहृतक्रियान्वयी, स्वार्थकर्मत्वान्वय्याहरणं, तादृशार्थकर्मतया एधस्य विवक्षितत्वात्तत्र चतुर्थी । चतुर्थ्या एवार्थस्तत्कर्मकाहरणप्रयोजनकत्वम् । पाकाय व्रजतीत्यादौ पाकं कर्तुमित्यर्थविवक्षायामनेनैव सूत्रेण चतुर्थ्युपपत्तावपि यदा पाककृतीच्छाधीनेच्छाविषयत्वरूपपाककर्मककरणप्रयोजनकत्वं न व्रजने विवक्षितं, अपि तु पाकेच्छाधीनेच्छाविषयत्वरूपं पाकप्रयोजनकत्वमेव विवक्षितं, तत्रापि चतुर्थ्युपपत्तये तुमर्थादिति सूत्रम् । अश्वाय घासः इत्यादौ अश्वपदस्याश्वभोजनपरतया तादर्थ्यचतुर्थ्येव । आह्रियते इत्यस्याध्याहारेणाश्वं भोजयितुमाह्रियते इत्यर्थविवक्षया क्रियार्थोपपदस्येत्यादिसूत्रेण चतुर्थ्युपपत्त्या अश्वपदस्य मुख्यार्थपरत्वोपपादनेऽपि अश्वघास इत्यत्राश्वपदस्य तद्भोजनपरतायास्तादर्थ्यचतुर्थ्याश्चावश्यकत्वात् । अन्यथाऽऽहृतपदसापेक्षतया चतुर्थीसमासानुपपत्तेः ।

न च तथापि समासानुपपत्तिः दुर्वारा—रन्धनाय स्थालीत्यादौ तद्वारणाय(चतुर्थी तदर्थार्थबलिहितसुखरक्षितैरितिसूत्रेण) चतुर्थीसमासे प्रकृतिविकारभावस्य नियामकत्वानुसरणादिति वाच्यम्, अश्वघासश्वश्रूहासादौ चतुर्थीति योगविभागेन शाब्दिकैः समासोपपादनात् । नमःस्वस्त्यादिशब्दयोगेऽपि तदर्थविशेषणवाचकपदात् नमःस्वस्तीत्यनेन चतुर्थ्यनुशिष्यते । नमः शब्दार्थस्त्यागो नमस्कारश्च, एषोऽर्थः

शिवाय नम इत्यादौ त्यागार्थकः । चतुर्थ्या च तत्र प्रकृत्यर्थस्य शिवादे रुद्देश्यत्वं प्रत्याय्यते । त्यागश्च यदि शिवस्याय भवत्वित्यादिफलेच्छाधीन स्वस्वत्वाभावेच्छारूपस्तदा त्यागोद्देश्यत्वं त्यागजनकेच्छायाः स्वत्वभागितया विषयत्वम् । यदि च त्यागरूपेच्छैव स्वस्वत्वाभावमिवान्यदीयत्वेन त्यज्य मानगतं स्वत्वमपि तत्र विषयीकरोति, न तु तज्जनकेच्छा, तदा स्वत्वभागि तया त्यागविषयत्वमेव तदुद्देश्यत्वम् । शिवादेर्विग्रहवत्त्वमते स्वीकाराभा वात् तदाकारतया ध्यातमन्त्रस्य त्यागोद्देश्यतामते सुतरां तदसम्भवाच्च । त्यज्यमानोपचारादौ स्वत्वाभावेऽपि तदीयत्वेन द्रव्ये स्वत्वावगाहिनीच्छा वि सर्जनादिरूपैव । द्रव्यनिष्ठान्यदीयस्वत्वे बाधित शिवादिनिरूपितत्व शिवादि निरूपितमसिद्धस्वत्वान्तरे चाऽबाधित तत्तद्द्रव्यसम्बन्धमवगाहते न च स्वत्वान्तररूपफलेच्छां विना स्वस्वत्वाभावगोचरेच्छैव न सम्भवतीति शिवादि स्वत्व त्यागस्यैव विषय इति पक्षोऽसम्भवद्दुक्तिक इति वाच्यम्, स्वस्वत्वा भावविषयकेच्छायाः पुण्यादिरूपफलजनकत्वात्तद्विषयस्य पुण्यादिजनकतावच्छे दकस्यापि पुण्यादिफलकत्वात् । अन्यथा तत्स्वत्वस्याधीष्टाजनकतया स्वतो ऽपुरुषार्थतया च प्रथममपि तदिच्छाया असम्भवेन प्रथमकल्पस्यापि हेयत्वा पातात् । तत्र च प्रथमकल्पे स्वस्वत्वप्रकारकेच्छाजन्यत्व, जन्यता सम्ब न्धेन तादृशेच्छावत्त्व वा चतुर्थ्यर्थ । तत्र प्रकृत्यर्थस्य शिवादेर्विषयता विशेषसम्बन्धेनान्वय । द्वितीयकल्पे च विषयितावशेष एव चतुर्थ्यर्थ । तत्र च निरूपितत्वसम्बन्धेन शिवादेरन्वय । नम पदार्थत्यागस्य च विषयिता विशेषसम्बन्धेन द्रव्येऽन्वयः । द्रव्यस्यैव वा विशेष्यतया भासमानत्यागे विष यिताविशेषसम्बन्धेनान्वयः । न च प्रथमान्तपदार्थस्य मुख्यविशेष्यतानियम इति वाच्यम्, भूतले न घट इत्यादौ निपातार्थस्यापि मुख्यविशेष्यतया भानात् । शिवायोत्सृजतीत्यादाविव नात्रानिराकर्तृसम्प्रदानता, नम पदार्थस्य क्रियात्वाभावात् । नम पदेन च स्वप्रयोक्तृपुरुषकर्तृकत्वोपरागेणैव त्यागो ऽभिधीयते । अन्योच्चरितनम पदेनान्यदीयत्यागाबोधनात्, तत्पुरुषोच्चरित नम पदात् त्यागबोधे सति त्यागे त्यज्यमानद्रव्य तदीयत्वसंशयानुदयात् ।

अत एव स्वामे तदीयत्वबोधनायाह ददे, मयादीयत इत्यादिवदहमम इति न प्रयुज्यते , न वा परकीयत्वबोधनाय चैत्रो नम इत्यादि ।

ऋत्विजा च यजमानरूपपुरुषान्तरीयतत्तद्द्रव्यत्यागे स्वीयत्वमारोप्यैव पूजाया नमः पद प्रयुज्यते । स चारोपस्तस्य विशेषदर्शनदशायामप्याहार्य- तयोपपद्यत इति प्रतिनिधिप्रयुक्तस्य दानवाक्यस्येव पूजाया तादृशनमःपद घटितवाक्यस्य बाधितार्थत्वेऽप्यदृष्टजनकत्व न विरुद्धम । अस्मच्छब्दादिवत् स्वोच्चारणकर्तृत्वोपलक्षितपुरुषविशेषवाचकानम पदादिशेषरूपेण अवाक्यस्य चैत्रत्वादेर्नानासम्भवेन तस्यापि वाच्येऽन्तर्भाव स्वीकरणीय । तदनुगमक त्वोपलक्षणीभूतमेनक लीनोभयावृत्तिशरीरजातित्वम् । स्वत्वाननुगमेऽपि शक्त्यै क्य कथ चिदुपपादनीय सर्वनामशक्त्यैक्यवत् । उपलक्षणरूपप्रविष्टमुच्चारण वेदीयत्वेन विशेषणीयम् । अत पूजाभिनयाहच्छिकात्यागबोधनायाम नम इति न प्रयोग । योग्यतासत्त्वेऽपि तत्र नम पदप्रयोगस्य वेदाबोधितत्वेन तद्घटिततत्तत्पदवाक्यपुरुषोपलक्षणरूपाप्रसिद्ध्याऽवाचकत्वात् । अत एव यथा नीचप्रीतिहेतुक्रियास्थले पूजयतीत्यादिवारणाय पूजयतीत्यादिवाच्यप्रीतौ गौरवित वृत्तित्व स्वसमभिव्याहृतपदार्थकर्तृपुरुषावधिकोत्कर्षवद्वृत्तित्वरूपमुपलक्षणमुपे यते । उक्तस्थले च योग्यतासत्त्वेऽपि नीचवृत्तिप्रतीतेस्तस्याभावेन तत्तात्पर्येण पूजयत्यादेर्न प्रयोग । तथा च नीचोद्देश्यकत्यागतात्पर्येण नमःपदाप्रयोगा पदतिप्रसङ्गवारणाय गौरवितोद्देश्यकत्याग एव नम पदशक्तिरित्यनादेयम् , गौरवितोद्देश्यकत्वस्य नम पदार्थशरीरे निवेशेऽपि गौरवितोद्देश्यकपूजातिरिक्त द्रव्यत्यागबोधनाय नम पदप्रयोगवारणायोक्तविशेषणस्योच्चारणेऽवश्य निवे शनीयतया तत एव तदतिप्रसङ्गवारणात् । इन्द्राय स्वाहा पितृभ्य स्वधेत्यादौ अग्निप्रक्षेपोपहितदेवोद्देश्यकत्यागबोधकस्वाहापदपितृद्देश्यकत्यागबोधकस्वधापदयो रपि नम पदवद्वेदादेशितोच्चारणकर्तृत्वोपलक्षितपुरुषीयत्यागवाचकता । अन्यथा पूर्ववदेवातिप्रसङ्ग । एव च देवोद्देश्यकत्वादरपि न वाच्यान्तर्भाव । अता दृशत्यागतात्पर्येण स्वाहादिप्रयोगस्य वेदादेशितत्वविरहेणैवानतिप्रसङ्गात् । अत एव ताम्बूलपूजायामर्घ्याचमनीयादिदानेऽग्निप्रक्षेपोपहितत्वम् देवतोद्देश्यकत्व

विरहेऽपि साक्षात्सबाधप्रयोगस्य नासमवेतार्थता । एवं च सति नमः
साक्षात्सधात्वन्दानाभेकस्थलेऽन्यप्रयोगस्य वेदबोधितत्वाभावेनैव नातिप्रसङ्गः ।
नतिरूपो नमःपदार्थश्च स्वापकर्षबोधनानुकूलः स्वीयव्यापारः । चतु
र्थ्यां चापकर्षावध्यत्वमत्वमवधिमत्त्वं वा प्रत्याय्यते । स्वमुच्चारयिता ।
तथा च चैत्राद्युच्चारितात् नमोहरयइत्यादिशब्दाद्धर्यवधिकचैत्रापकर्षबोधानुकू
लचैत्रीयव्यापार इत्याकारको बोधः । नारायणं नमस्कृत्येत्यादौ नमः
शब्दयोगेऽपि न चतुर्थी । द्वितीयया कारकविभक्त्या बलीयस्या बाधात् ।
अथात्र नारायणादेर्नमस्कारघटकापकर्षावधित्वमेव, तच्च न कर्मत्वम्,
कर्मत्वं च क्रियाजन्यफलशालित्वादिरूपमेव, तच्च न तस्येति द्वितीयाया
नाप विषयः । न चापकर्षबोधरूपफलाश्रयत्वरूपकर्मत्वं तत्राबाधितमेवे
ति वाच्यम्, एवं सति नारायणावधिकापकर्षबोधकदण्डवत्प्रणिपातादि
लिङ्गकतादृशापकर्षबोधाश्रयतया पुरुषान्तरसाधारणतया नारायणप्रणामदर्शा-
या मनुष्यं नमस्करोतीत्यादिप्रयोगापत्तेः । यदि चापकर्षावधित्वप्रकारक
बोधानुकूलव्यापारो नमस्कारः, तद्घटकबोधविशेष्यतया नारायणादेः कर्मत्वम्,
क्रियाजन्यफलशालित्वरूपे कर्मत्वे च व्यापारांशेऽनुकूलतासम्बन्धेन विशेषणी
भूतं फलमेव विवक्षणीयम्, अत्र चानुकूलत्वमेव व्यापारांशे विशेषण
मित्यपकर्षावधित्वबोद्धुः पुरुषान्तरस्य न कर्मत्वमुच्यते, तदापि नारायण
प्रणामेत्यादावेव कर्मत्वमुपपद्यते न तु नारायणं नमस्कृत्येत्यादौ, नमः
पदार्थघटकज्ञानस्य धात्वर्थताविरहेण तद्विषयताया कर्मतानात्मकत्वात् ।
कृतिविषयतायाश्च नमःपदार्थव्यापार एव सत्त्वात् । मैवम्, नमस्करोती
त्यादौ कृधातुनैव व्यापारबोधात् । अत्र नमःपदं स्वापकर्षावधित्वप्रकारक
बोधविषयतामात्रं निपातार्थः । अत एव समभिव्याहृतः कर्ता, तथा च
तादृशबोधविषयताप्रयोजकव्यापारानुकूलकृतिमानिति समुदायार्थीनो बोधः ।
तादृशविषयताश्रयतया नारायणादेः कर्मत्वम् । यतो धात्वर्थतावच्छेदकफल
शालित्वं कर्मत्वमित्यत्र धात्वर्थतावच्छेदकत्वं न धातुजन्यतावच्छेदकत्वम्, अपि
तु व्यापाररूपार्थेऽनुकूलतासम्बन्धेन विशेषणतया धातुप्रतिपाद्यत्वम् । प्रकृते
निपातार्थस्य धात्वर्थेन साक्षादन्वयेन तादृशबोधविषयत्वरूपस्य नमःपदार्थस्य

तदवच्छेदकत्वमक्षतमेव । न चैवं पूर्वदेशादेर्गम्यादिकर्मत्वं दुर्वारं, विभागादौ क्रियाजन्यत्वसत्त्वेऽपि निरुक्तधात्वर्थतावच्छेदकत्वाभावात् । न हि विभागादिर्गम्याद्यर्थे कथमपि विशेषणतया भासते । एवं च नारायणादेः करोतिकर्मत्वेऽपि नमःपदादिकं विना न तद्योगे नारायणादिपदोत्तरं द्वितीया । तदर्थान्वयिफलोपस्थापकाभावेन तदर्थानन्वयात्, नापि नारायणं फलं करोतीति प्रयोगापत्तिः, फलस्यात्र धात्वर्थव्यापारे साक्षाद् विशेषणत्वात् । निपातातिरिक्तनामार्थस्य धात्वर्थे भेदेनान्वयस्याव्युत्पन्नत्वात् । धात्वर्थे साक्षाद्विशेषणीभवत्येव फले द्वितीयार्थाधेयत्वान्वयात् । अत एव पुरस्कृत्य शिखण्डिनमित्यादावपि शिखण्ड्यादेः कृतिकर्मता । धात्वर्थव्यापारविशेषणपुरःपदरूपनिपातार्थाग्रदेशावस्थानरूपफलाश्रयत्वात् । नारायणो नमस्क्रियते, व्याघ्रान् पुरस्क्रियते, इत्यादौ निपातार्थफलं धात्वर्थव्यापारे विशेष्यतयैव भासते । तदन्वितमाश्रयत्वं कर्माख्यातादिना प्रत्याय्यते । अथैवमपि कारकविभक्तेः साक्षाद्धात्वर्थान्वयित्वनियमभङ्ग इति चेन्न, तादृशनियमे निपातातिरिक्तार्थमद्वारीकृत्येत्यस्यैव साक्षादर्थत्वात् । अन्यथा घटो दण्डाज्जायते न पारिमाण्डल्यादित्यादौ कारकविभक्त्या जन्यत्वार्थान्वयिनि नञर्थाभावे प्रतियोगितया स्वार्थप्रयोज्यत्वादिबोधनासम्भवात् । पारिमाण्डल्यादिनिरूपितमपि प्रयोज्यत्वं विषमितया तदवच्छिन्नजनकताकज्ञानादौ प्रसिद्धम् । प्रयोज्यत्वविशिष्टोत्पत्तिरेव वा तत्र धात्वर्थः । तत्र पञ्चम्यन्तार्थपारिमाण्डल्यनिरूपितत्वस्याभावो नञा बोध्यते । उक्तरीत्या क्रियायोगे नमस्कार्यस्य कर्मत्वेऽपि स्वयम्भुवे नमस्कृत्येत्यादौ चतुर्थी अपकर्षान्वयाद्यधिकमात्रविवक्षया ।

केचित्तु—नारायणं नमस्कृत्येत्यादौ नमःपदं नतिकर्मपरम् । तथा च नारायणं नतिकर्म कृत्वेत्यर्थविवक्षया घटं शुक्लं करोति शुक्लीकरोतीत्यादौ घटादेरिव नारायणादेः कृतिकर्मता, शिखण्डिनं पुरस्कृत्येत्यादौ पुरःपदमग्रस्थितपरम्, एवं घटं साक्षात्करोतीत्यादौ साक्षात्पदं प्रत्यक्षविषयपरम्, एवं तु समाविष्करोतीत्यादावप्याविःपदं ज्ञानगोचरार्थकमिति सर्वत्र पूर्ववद्द्वितीयानिर्वाहः— इत्याहुः । नमःपदस्य धर्मिबोधकत्वे हरिर्नमो भवतीत्यादिवन्नमो भवतीति प्रयोगप्रसङ्गात् ।

तस्मान्नमस्करोति आविष्करोति पुरस्करोति अलङ्करोतीत्यादौ नम प्रभृतयो निपाता धर्मवाचका एव; लाघवात्, तत्तद्धर्माश्रयस्य दर्शितरीत्यैव कर्मतोपपत्तेः । आविर्भवतीत्यादिप्रयोगानुरोधेन चाविरादिशब्दानां प्रकटताश्रये धर्मिणि लक्षणोपेयते । शुक्लः पट इत्यादौ शुक्लादिशब्दानामिव ।

अस्तु वा तत्रापि प्रकटनादिरूपो धर्म एव तदर्थस्तस्यैव धात्वर्थभावे धर्मरूपेऽभेदान्वयः । क्रियाया स्वार्थाभेदान्वये आविरादेरेवाकाङ्क्षा स्वीक्रियते, न तु नमःपदादेरिति न नारायणो नमो भवतीत्यादेः प्रसङ्गः । शुक्लीकरोतीत्यादौ च्विप्रत्ययान्तस्यापि शौक्ल्यादिधर्म एवार्थः । अभूततद्भावे तदनुशासनात् । अभूतस्य पूर्वकालावच्छेदेन शुक्लादिभावरहितस्य तद्भाव शौक्ल्यादि । अथ वा अभूतः पूर्वकालावच्छेदेन धर्मिण्यविद्यमानस्तद्भाव. शौक्ल्यादि । शुक्लीभवतीत्यादौ तु दर्शिता रीति । न चाभूततद्भावपर्यन्तस्य च्विप्रत्ययार्थत्वे गौरवाच्छुक्लादिपदोपस्थाप्यपदार्थतावच्छेदकशौक्ल्याद्यन्वयि अभूतत्वमेव च्विप्रत्ययार्थोऽस्तु , शुक्लतर इत्यादौ तरबाद्यर्थोत्कर्षस्येव च्व्यर्थस्यापि व्युत्पत्तिवैचित्र्येण पदार्थतावच्छेदकेऽन्वयसम्भवादिति वाच्यम् ; त्वन्मतेऽपि शौक्ल्यादिमात्रस्यैव च्विप्रत्ययार्थतोपगमेन गौरवानवकाशात् । पूर्वकालावच्छिन्नत्वनिष्ठाभावप्रतियोगित्वसहितस्याधेयत्वस्य प्रत्ययार्थे प्रकृत्यर्थस्य सम्बन्धतया भानोपगमात् । शौक्ल्यादावभूतत्वलाभेनैव जलपरमाणु शुक्लीभवतीति प्रयोगाप्रसङ्गात् । शौक्ल्यादेर्धर्मत्वेनैव वाच्यता न तु ताद्रूप्येणेति न शक्त्यानन्त्यम् । प्रकृत्यर्थतावच्छेदकतत्तद्धर्मनिष्ठाधेयताविशेषाणामेव सम्बन्धतया भानोपगमात् धर्मान्तरस्याभूतत्वमादाय न जलपरमाणुः शुक्लीभवतीत्यादिप्रसङ्गः । प्रकृत्यर्थतावच्छेदकप्रागभावमात्रस्य च्विप्रत्ययार्थत्वमते तु अशुक्लीभवतीत्यादौ प्रकृत्यर्थतावच्छेदकशौक्ल्याद्यभावस्य प्रागपि क्वचिद्विद्यमानतया तदभावान्वये योग्यतानुपपत्ति. , तत्तद्धर्मिण्यविद्यमानत्वस्य च्व्यर्थत्वे शक्त्यानन्त्यमिति पूर्वकालावच्छिन्नोऽभाव एवाविद्यमानत्वम् । तस्य च प्रकृत्यर्थतावच्छेदके सामानाधिकरण्यसहितप्रतियोगित्वसम्बन्धेनान्वयो वाच्यः । प्रकृत्यर्थे च तादृशसम्बन्धेनाभावविशिष्टस्य वैशिष्ट्यभानमुपेयम् । अन्यथाऽन्यत्र स्वाभावसमानाधिकरणस्याशौक्ल्यादेः सर्वदाऽशुक्लकाकादावपि सत्त्वेन काकोऽशुक्लीभवतीति प्रयोग. स्यात् । अत्राभावरूपपदार्थान्तरविशिष्टप्रकृत्यर्थतावच्छेदक

वैशिष्ट्यभानं च प्रकृत्यर्थे न सम्भवतीति प्रकृत्या स्ववृत्तिसहकारेण स्वार्थे यादृशविशेषणावच्छिन्नप्रकृत्यर्थतावच्छेदकीययादृशसम्बन्धेन प्रकृत्यर्थतावच्छेदकं प्रत्याय्यते, पदान्तरसमभिव्याहाररूपाकाङ्क्षयापि प्रकृत्यर्थतावच्छेदकीयतादृशविशेषणावच्छिन्नसम्बन्धप्रत्यायनेन प्रकृत्यर्थतावच्छेदकीयतादृशसम्बन्धे-च्विप्रत्ययार्थवृत्त्या प्रकृतिवृत्त्याऽभासमानस्य भानासम्भव इत्यनुपपत्तिः । अस्मन्मते तु भवत्यर्थे भावे च्विप्रत्ययान्तार्थस्याधेयतासम्बन्धेन पूर्वकालावच्छिन्नस्वाभावाधिकरणविशिष्टस्य अशौक्ल्यादेः सामानाधिकरण्यसम्बन्धेनैवान्वयस्योपगन्तव्यतया तेन सम्बन्धेन चाधिकरणविशिष्टाशौक्ल्यादिना विशिष्टस्य भवत्यर्थस्यैवाख्यातार्थे आश्रयत्वे निरूपितत्वसम्बन्धेन भानात् तादृशविशिष्टनिरूपिताश्रयत्वस्य च पूर्वकालावच्छेदेनाशौक्ल्याद्यभावाधिकरण एव सत्वेन नोक्तातिप्रसङ्गः । अन्यत्स्वयमूह्यम् । स्वस्ति भवतु इत्यादावाशीः स्वस्त्यर्थः । सा च परहितविषयकस्वेच्छा । स्वमुच्चारयिता, हितान्वयी सम्बन्धश्चतुर्थ्यर्थः । एवं च भवदीयहितविषयिणी मदीयेच्छेति बोधः । कल्याणाद्यर्थकोऽपि स्वस्तिशब्दः, " स्वस्त्यस्तु मह्य " मित्यादौ, तत्रापि चतुर्थ्यर्थः सम्बन्धः स्वस्त्यर्थान्वयी । इत्यलम् ।

इति चतुर्थी ।



॥ श्रीरस्तु ॥




# अथ पञ्चमी ।

'वृक्षात् पर्णं पतति' इत्यादौ पञ्चम्याः प्रकृत्यर्थस्य वृक्षादेः पतनादिक्रियायामपादानत्वं प्रत्याय्यते । अपादानत्वं च स्वनिष्ठभेदप्रतियोगितावच्छेदकीभूतक्रियाजन्यविभागाश्रयत्वम् । पर्णादेः स्वनिष्ठवृक्षादिविभागजनकपतनाश्रयत्वादपादानत्ववारणाय भूतान्तं क्रियाविशेषणम् । भेदप्रतियोगितावच्छेदकत्वं विभागे च पञ्चम्यर्थद्वयम् । भेदे विभागे च वृक्षादेः प्रकृत्यर्थस्याधेयतासम्बन्धेनान्वयः । प्रतियोगितावच्छेदकत्वमाश्रयत्वसम्बन्धेन विभागश्च जनकतासम्बन्धेन क्रियायामन्वेति ।

जनकताश्रयस्य प्रतियोगितानवच्छेदकतया तस्य तत्र धात्वर्थविभागाभावं क्रियाया बोधयितुं न शक्यत इति चेत् ?, तर्हि विभागजनकत्वमेव पञ्चम्यर्थोऽस्तु प्रतियोगितावच्छेदकत्वस्य तस्याश्रयतासम्बन्धेन क्रियायामन्वयः, एवं च वृक्षनिष्ठभेदप्रतियोगितावच्छेदकवृक्षनिष्ठविभागजनकपतनाश्रयं पर्णमित्याकारक उक्तस्थले बोधः ।

अथ पञ्चमीप्रतिपाद्यतयोक्तयोः पञ्चम्यर्थयोर्द्वयोरन्वयो युगपदेव यथायोगमेकतरस्य वा ? नाद्यः पक्षः — 'पर्णं वृक्षात्पतति न स्वस्मात्' इत्यत्र स्वनिष्ठपतने स्वनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावसत्त्वेऽपि स्वनिष्ठविभागजनकत्वानपायेन 'वृक्षात्पतति न भूतलात्' इत्यत्र पर्णे भूतलादिनिष्ठविभागाजनकत्वाभावसत्त्वेऽपि तन्निष्ठभेदप्रतियोगितावच्छेदकत्वसत्त्वेनान्वयायोग्यतापत्तेः । नापि द्वितीयः, — 'वृक्षात् पर्णं पतति न पर्णात्' इत्यत्र पर्णनिष्ठपतने पर्णनिष्ठविभागाजनकत्वस्यैव पर्णनिष्ठभेदप्रतियोगितावच्छेदकतया पर्णनिष्ठभेदप्रतियोगितानवच्छेदकत्वस्यापि बाधाद्योग्यताया निर्वाहयितुमशक्यत्वादिति ।

अथ यस्य व्याघ्राधीनं भयमप्रसिद्धमथ च व्याघ्राधीनत्वेनाऽसौ स्वीयमरणा दिकं सम्भावयति, तत्पुरुषपरं 'व्याघ्राद् बिभेति' इति कथं प्रयोगः प्रमाणम् ? अनिष्टव्यापारानिरूपकस्य बाधादिति चेत् ?, भयार्थकधातुयोगे प्रयोज्यतप्रकारकत्व पञ्चम्यर्थः, तच्चानिष्टसम्भावनायामन्वेति प्रकृते च व्याघ्राधीनत्वस्य तत्पुरुषीयाऽनिष्टे सम्भाव्यमानिष्टसम्भावनाया तत्प्रकारकत्वसम्बाधितमेवेति नानुपपत्तिः । एवं च शुभ्रं मेघं बिभेति इत्यादिवाक्यस्यापि प्रामाण्यनिर्वाहः । एवं च भयार्थकधातुयोगे भयहेतुत्वेन सम्भावितमपादानमित्येकः सूत्रार्थः, अनिष्टविरहानुकूलव्यापाररूपत्राणार्थकधातुयोगे तदनिष्टप्रयोजकं तदित्यपरः । अनिष्टं च दुःखमेव सर्वं त्रानुगतम् ।

यत्र च दुःखं कस्यापि न प्रसिद्ध्यति तादृशस्थाल्यादिकण्टकादेरपादानत्वं कथमिति चेत् ?, तर्हि विनाशस्य दुःखोपधायकव्यापारविरहानुकूलव्यापारस्तदपादानकः स्वकर्मकं रक्षणमिति वक्तव्यम् । घटाद्यचेतनकर्मकं रक्षणं विनाशोपधायकव्यापारविरहानुकूलव्यापारः तदपादानकः स्वकर्मकं रक्षणमिति वक्तव्यम् । घटाद्यचेतनकर्मकरक्षणं विनाशोपधायकव्यापारविरहमर्म निर्वाच्यम् ।

'यवेभ्यो गां वारयति' 'कूपादन्धं वारयति' इत्यादौ "वारणार्थानामीप्सितः" इत्यनेन यवकूपादेरपादानत्वम्, वारणं क्रियाप्रतिषेधः, तदर्थकधातुयोगे ईप्सित तत्क्रियाजन्यफलभागितया तत्क्रियाकर्तुरभिमतो ऽपादानमिति सूत्रार्थः, क्रिया च भक्षणगमनादिरूपा, तात्पर्यवशात् काचित् कस्याश्चित् प्रतिषेधो वारयत्यादिना बोध्यते, प्रतिषेधः कर्तृत्वाभावानुकूलव्यापारः । कर्तृताभावरूपधात्वर्थतावच्छेदक फलशालितया गवान्धादेः कर्मता । यवादिपदोत्तरपञ्चम्या यवादिगतत्वेनेच्छाविष फलकत्वं भक्षणादौ प्रत्याय्यते, इच्छा च भक्षणादिक्रियाकर्तृगवादिनिष्ठा, तदर्थे ऽतभावनीया, एवं चोक्तस्थले यवनुर दितिउ गेन गवा भक्षणादिविषये धे गताऽ

भूसंयोगोत्तरदेशसंयोगादिर्गवादिनिष्ठतत्तत्फलकव्यापारविशेषकर्तृत्वाभावानुकूलव्या
पारानुकूलकृतिमानित्याकारको बोध । अन्धादेर्यद्यपि कूपगमनत्वादिना नेच्छा
तथाप्यभिमुखदेशगमनत्वादिना कूपगमनादेरिच्छा वर्तत एवेति, वस्तुगत्या य-
कूपादिदेशसंयुक्तत्वेन क्रियाज यत्संयोगस्य तदिच्छाविषयत्वमक्षतमेव ।

न च प्रकृते यवकूपादिनिष्ठफलविशेषजनकत्वमेव पञ्चम्यर्थोऽस्तु, किमिच्छा
ऽन्तर्भावेनेति वाच्यम्, यत्र चैत्रादेर्नान्तरीयकतया विषभोजनादिकं प्रसक्तं न तु स्वे
च्छातस्तत्र तद्भोजनविरोधिव्यापारकर्तरि 'चैत्रं विषाद्वारयति' इति न प्रयोग , अपि
तु 'सविषाद्वारयति' इत्यादिरेव, तत्र पूर्वप्रयोगवारणाय सूत्रकृता "ईप्सित."
इत्यत्र सन्प्रत्ययेनेच्छोपदानम् । अत एव यद् यवादिकं केनापि न भुक्तं तत्कर्मक
भोजनाप्रसिद्धावपि भोजनफले संयोगविशेषे तद्यवादिगतत्वेनेच्छाविषयत्वप्रसिद्ध्या
तद्यवाद् गां वारयति इत्यादिप्रयोगोपपत्तिः । एवं च तत्र भक्षणादौ तद्यवा
दिकर्मकत्वगवादिकर्तृकत्वोभयाभावबोधाय केषाञ्चित् प्रयासोऽनादेय एवेति ।

'पण्डितात् पुराणं शृणोति' 'उपाध्यायाद्वेदमधीते' 'ग्रामादधीतस्य देश'
इत्यादौ "आख्यातोपयोगे" इत्यनेनापादानता, तत्र प्रकृत्यर्थं पण्डिता
दिकर्तृकोच्चारणाधीनत्वं पञ्चम्यर्थः, तस्य च श्रवणोच्चारणाधीविशेषपत्तनादिक्रियाया
न्वय ।

'मृत्पिण्डाद् घटो जायते' इत्यादौ "जनिकर्तुः" इत्यनेनापादानत्वम्,
तत्र प्रकृतित्वं विकारित्वम् प्रकृतिविकृतिभावाभावेऽपि "प्राक् कैकयीतो भरत-
स्ततोऽभूत्" 'वायोरग्नि' इत्यादौ पञ्चमीदर्शनात्, न हि सुतवपुषो मातापितृ
शरीरविकारत्वम्, अपि तु तदीयशुक्रशोणितादिविकृतित्वमेव, शुक्रशोणितादे शरीर
त्वेऽपि मलमूत्रादेरिव शरीरावयवत्वाभावात् तदवयवारभ्यत्वस्यैव तद्विकारतारू
पत्वात् ।

न च तत्र हेतुपञ्चम्येव नऽपादानपञ्चमीति वाच्यम्, गुणातिरिक्तहेतौ पञ्चम्यनुशासनविरहात्। अन्यथा 'दुग्धाद् दधि जायते' 'मृत्पिण्डेभ्यो घटो जायते' 'शृङ्गाद् धनुर्जायते' इत्यादावपि हेतुपञ्चम्यैवोपपत्तौ "जनिकर्तुः" इत्यादिसूत्रस्यैव वैयर्थ्यापत्तेः, तस्मात् कारणत्वमेव प्रकृते प्रकृतित्वम्। 'दण्डाद् घटो जायते' इत्यादयोऽपि प्रयोगा इष्यन्त एव। अत एवेश्वरस्य द्रव्यादिकार्याऽप्रकृतित्वेऽपि "यतो द्रव्य गुणाः कर्म" इत्यादौ पञ्चमी। न च प्रकृतिपदेन कारणमात्रविवक्षायामपि क्रियाविवक्षाऽभावादपादानपञ्चम्यनुपपत्तिः, हेतुपञ्चमी चोक्तक्रमेण प्रकृतेऽनुपपन्नैवेति वाच्यम्, अगत्या 'जायते' इत्यादिक्रियाध्याहारेण तत्र पञ्चम्या उपपादनीयत्वात्।

'हिमवतो गङ्गा प्रभवति' इत्यादौ "भुवः प्रभवः" इत्यनेनाऽपादानता, प्रभवत्यस्मात् प्रभवनम् प्रथमं प्रकाशः, स प्रभवः, प्रथमप्रकाश एव प्रभवार्थः। पञ्चम्यर्थः सम्बन्धाधीनत्वं तादृशक्रियायामन्वेति, सम्बन्धे च हिमवदादेः प्रकृत्यर्थस्यान्वयः।

'उपाध्यायादन्तर्धत्ते छात्रः' इत्यादौ "अन्तर्धौ येनादर्शनमिच्छति" इत्यपादानता। अन्तर्द्धिः—अन्तर्धानम्, स्वनिष्ठान्यकर्तृकदर्शनविरहोद्देश्यको व्यापारः, एवं च व्यापारानुकूलतयाऽन्तर्धानघटको यत्कर्तृकदर्शनविषयताविरहोद्देश्यः सोऽपादानमिति सूत्रार्थः। उक्तस्थलीयपञ्चम्या अन्तर्द्धिघटकदर्शनान्वयिकर्तृतानिरूपकत्वमेवार्थः इत्युपाध्यायकर्तृकदर्शनविषयताया यः स्वनिष्ठोऽभावस्तदुद्देश्यकव्यापारकर्ता छात्र इति तत्रान्वयबोधः।

इदं तु बोध्यम्— 'अस्मादयं दीर्घः' 'अस्मादयं तारः' इत्यादौ नापादानपञ्चमी; दैर्घ्यादेरपादानत्वस्याऽननुशासनात्। "ध्रुवमपायेऽपादानम्" इत्यनेन ह्यपाये-विभागरूपक्रियायां क्रियान्तरजन्यविभागे च, यदवधिभूतं तस्याऽपादानत्वं विधीयते न स्वरूपविभागस्य। यदि चापायपदं वस्तुमात्रोपलक्षकमुच्यते तदा तदुपादानमनर्थकं स्यात्।

अथ तत्पदेन क्रियामात्रमुपलक्ष्यते ' अस्माद् दीर्घं ' इत्यादौ च 'भवति' इत्यध्याहार्यम्, दीर्घभवनं च दीर्घतैवेति क्रियायाः सावधित्वम्, आवश्यकश्च क्रियाध्याहारः, तद्योगमन्तरेण कारकत्वस्याऽनिर्वाहात् । एवम् ' बलाहकाद्विद्योतते विद्युत् ' इत्यादौ द्योतनादिक्रियायाः सावधिकत्वविरहेण 'निःसृत्य' इत्यध्याह्रियते । अत एव नेदमपादानं निर्दिष्टविषयम्, अपि तूपात्तविषयमिति वैयाकरणाः । निर्दिष्टत्वम्, उच्चरितत्वम्, उपात्तत्वम् अध्याहृतत्वम्, विषयोऽवधित्वनिरूपकः । निःसरणं च विभाग एवेति उक्तस्थले अध्याहृतक्रियायाः सावधिकत्वमिति चेत् ?, एवं सति ' वृक्षात् पतति ' इत्यादौ वृक्षादेरसंग्रहः । तत्रापि विभागक्रियाऽध्याह्रियते इति चेत् ?, तत्र निर्दिष्टविषयताप्रवादविरोधः ।

एवम् ' अस्माद् दीर्घं ' इत्यादावपि क्रियाध्याहारे तत्समशीले ' माथुराः सौघ्नेभ्य आढ्यतराः ' इत्यादावपि क्रियाया अध्याहरणीयतया तत्राऽपादानस्याऽपेक्षितक्रियारूपस्योपात्तविषयान्तर्भावप्रसङ्ग इति साहचर्याऽपादानयोरविशेषापत्तिः । एवं च—

" उपात्तविषयं किंचिन्निर्दिष्टविषयं तथा ।
अपेक्षितक्रियं चेति त्रिधाऽपादानमुच्यते ॥ "

इति शाब्दिकविभागविरोधः ।

अथ तत्पदेन क्रियासामान्यं क्रियाजन्यविभागश्च विवक्षितः, एवं च 'वृक्षात् पतति ' इत्यादौ न विभागात्मकक्रियाध्याहार इति तदपादानमपि निर्दिष्टविषयम्, यत्राऽपादानतानिर्वाहार्थमेव क्रियाऽध्याहारः ' बलाहकात् ' इत्यादौ, तदपादानमुपात्तविषयम्, यत्र वाक्यसमाप्त्यर्थं तदध्याहारस्तत्र एव चाऽपादानतानिर्वाहो यथा 'माथुराः सौघ्नेभ्यः ' ' अस्माद् दीर्घं ' इत्यादौ, तदपेक्षितक्रियमिति चेत् ?, एवमपि ' अधमस्मात्तारः ' इत्यादावगतिः —तत्र हि तारत्वं जातिः, जातेश्च न सावधिकत्वमिति कुतोऽपादानता । अन्यथा 'अश्वमस्माद् गौः ' इत्यापत्तिः । न च जातेरपि तारत्वस्य ' अधमस्मात्तारः ' इति प्रतीतिरस्माद् भव

# अथ षष्ठी ।

सम्बन्धविवक्षायां कारकविभक्त्यप्रसक्तेः "शेषे षष्ठी" इत्यनेन 'चैत्रस्येदम्' इत्यादौ षष्ठी विधीयते । 'चैत्रस्य द्रव्यम्' इत्यादौ स्वत्वस्य, 'चैत्रस्य स्वम्' 'घटस्य कारणम्' 'चैत्रस्य हस्तः' इत्यादौ निरूपितत्वावयवत्वादीनां सम्बन्धत्वेनैव षष्ठ्यर्थता, न तु विशिष्य-शक्त्यानन्त्यप्रसङ्गात् । संयोगादिसम्बन्धत्वेऽपि 'चैत्रस्य गेहं याति' इत्यादौ स्वत्वादिसम्बन्धविशेषबोधतात्पर्येण यत्र गेहमुपपद्यते तत्र विशेषरूपेण षष्ठ्या लक्षणैव, "सुब्विभक्तौ न लक्षणा", इति प्रवादस्य 'अनुशासनाऽवरुद्धे एकविभक्त्यर्थेऽपरविभक्तेर्न लक्षणा' इत्येव परत्वात् । अत एव च "कृद्योगेऽपि हि षष्ठी सम्बन्धत्वेनैव बोधयति" इति मिश्राः । इत्थमेव च सम्बन्धत्वेन कर्मत्वादिविवक्षायाम्, 'मातुः स्मृतम्' इत्यादौ "अधीगर्थ" इत्यादिषष्ठ्यनुशासनस्य नियमपरतया सार्थक्योपपादनं युक्तिकृतामुपपद्यते, सम्बन्धत्वविशिष्टसम्बन्धविवक्षायां "शेषे षष्ठी" इत्यस्य षष्ठीविधायकत्वेनात्र तादृशानुशासनस्य विधित्वमेव स्यात् । अत एव च "आम शूद्रस्य पक्वान्नं पक्वं शूद्रस्योच्यते" इत्यत्र 'पक्वम्' इत्यत्रानुषज्यमानया षष्ठ्या सम्बन्धत्वेन कर्तृत्वमर्थो न तु स्वत्वम्— शूद्रकर्तृकत्वोक्तौ चरुहोमानुपपत्तेरिति नव्यनैयायिकानां मतमप्युपपद्यते ।

न च तत्र कृद्योगा षष्ठी कर्तृत्वेनैव बोधयतीति वाच्यम्, निष्ठायोगे तस्याः निषेधात् । अत एव "नाग्निस्तृप्यति काष्ठानां न पुंसां वामलोचना" इत्यादौ करणत्वादेः सम्बन्धत्वेन विवक्षया षष्ठ्युपपत्तिः, तृतीयादिविधिविषयतया विशेषरूपेण करणत्वादिसम्बन्धविवक्षायां षष्ठ्यनुपपत्तेः ।

अथ सम्बन्धमात्रेण सम्बन्धस्य षष्ठीवाच्यत्वे 'पुरुषस्य दण्डः' इत्यादिवत् 'दण्डस्य पुरुषः' इत्यादेरपि प्रयोगः स्यात् । एवम् 'दण्डी पुरुषः' 'रूपवान् घटः' इत्यादिवत् दण्डरूपादेः पुरुषघटाद्याधारत्वेऽपि 'पुरुषी दण्डः' 'घटवद्रूपम्' इत्यादिः प्रयोगो दुर्वारः — 'तदस्यास्ति' इत्यर्थे इव 'तदस्य' इत्यर्थेऽपि मतुपो विधानात्, दण्डरूपादिपदोत्तरषष्ठ्या चैत्रघटादिनिष्ठतदर्थसम्बन्ध

सैव कर्तृप्रभृतिपरम्परासम्बन्धावच्छिन्नाधारताया एव सप्तम्यर्थत्वेन सर्वसामञ्जस्यात् । परम्परासम्बन्धस्यापि प्रतीतिबलेन क्वचिदाधारतानिवामकत्वोपगमात् । अवच्छेदताविशेषो ऽप्याधारसप्तम्यर्थः । यथा वीणायां शब्द , कर्णे शब्दः वृक्षाग्रे कपिसंयोग इत्यादौ । एषु स्थलेषु कारकतानिर्वाहाय भवतीत्य व्यवहारः ।

अथ वा "सप्तम्यधिकरणेचेति" चकारेणाकारकाधारवाचिनोऽपि सप्तमी । अत एव साध्यवन्निष्ठात्यन्ताभावाप्रतियोगित्वमिति यत्र साध्यवन्निष्ठे यः अभावस्तत्र इति सप्तमीतत्पुरुषेण व्याख्यानं सङ्गच्छते । तत्र क्रियाध्याहारे सापेक्षतयाऽसामर्थ्येन समासानुपपत्तेः ।

'चर्मणि द्वीपिनं हन्ति' इत्यादौ "निमित्तात्कर्मयोगे" इत्यनेन सप्तमी प्रकृत्यर्थचर्मादेर्हननादिक्रियानिमित्तत्वं बोधयति । निमित्तत्वं च न कारणत्वम् , चर्मादेर्हननादिक्रियाकारणत्वे मानाभावात् । पूर्ववर्तित्वेऽपि इच्छाकृत्यादिनाऽन्यथासिद्धत्वात् । अपि तु क्रियाजनिका या विनियोज्यत्वेनेच्छा तद्विषयत्वम् ; स्वविषयकतादृशेच्छाधीनत्वमेव तत्र क्रियान्वयी सप्तम्यर्थः । तदेकदेशविषयितायां निरूपितत्वेन प्रकृत्यर्थान्वयः । कर्मादेर्णात्वयाप्यादेः सम्बन्धस्य न सप्तम्यर्थ , अपि तु सप्तम्याः साधुत्वे स्वरूपतोऽपेक्षितः ।

'गोषु दुह्यमानासु गत' इत्यादौ "यस्य च भावेन" त्यनेन गत्यादिपदात्सप्तमी । तत्समानाधिकरणदुह्यमानादिपदाच्च 'नास्ति घटमानये' त्यादौ नञादिपदात् द्वितीयाद्विशेषणपदस्य विशेष्यपदसमानविभक्तिकत्वनियमात्सप्तमी । विधाय सूत्रे च भावपदं क्रियापरम् । तथा च यद्विशेषणकृदन्तार्थविशेषणतापन्नक्रियया क्रियान्तरस्य लक्षणं भावतेन तद्वाचकपदात्सप्तमीति तदर्थः । उक्तस्थले गमनादिक्रिया दोहनादिवर्तमानकालीनत्वादिपुरस्कारेण बोध्यत्वाभिमता । अतो व्यावर्तकविशेषणविशिष्टाख्यक्रियाया अपि व्यावर्तकतया तत्कर्मायभेदान्वयिगवादिपदात्सप्तमी । अथ तादृशसप्तम्याः समानकालीनत्वादिकमर्थः , तत्र दुहधातूपस्थापितदोहनादेर्निरूपितत्वेनान्वयाद्दोहवर्तमानकालीनत्वादिकं गमनादौ लभ्यत इति न युक्तम् ; दुहधातूपस्थापितक्रियायाः कृदर्थविशेषणतयोपस्थितायाः समानकालीनत्वादिविशेषणत्वासम्भवात् । प्रकृत्यर्थगवादिनान

न्विताथंस्य सप्तम्या बोधनासम्भवाच्च । किं तु समभिव्याहृतदोहनादिक्रियैव स-म्बन्धः । तस्याश्च समानकालीनत्वादिकं क्रियान्तरे सम्बन्धः । तत्र वर्तमानार्थकशतृसमभिव्याहारस्थले समानकालीनत्वं ' दोग्धुष्यासु गतः ' इत्यादि भविष्यदर्थकक्त्वस्थले प्राक्कालीनत्वं ' दुग्धासु गतः ' इत्यादावतीतार्थकक्तस्थले उत्तरकालीनत्वं सम्बन्धतया भासते ।

' पायसि पीते तृषा शाम्यति ' इत्यादावतीतार्थकक्तसमभिव्याहाराकार्यकारणभावोऽपि सम्बन्धतया भासत इत्यादिकमूहनीयम् ।

' गुणान्यत्वे सति सत्त्वा ' दित्यादौ सतीत्यनन्तरं सत इत्यध्याहार्यम् ; अन्यथा लक्षणक्रियाया नोक्तसूत्रविषयतया सप्तम्यनुपपत्तेः । तत्र चाऽरच्चा तीरर्थं आधारता, गुणान्यत्वाधारतायाश्च सत्ताधारताया तद्विशिष्टत्वं सम्बन्धतया भासत इति चिन्तामणिकारोक्तसमानाधिकरण्यकाभनिर्देशः । *' शयानेन चैत्रेण भुक्त ' मित्यादौ शयनभोजनादिक्रिययोः समानकालीनत्वभानेऽपि तत्र लट्प्रत्ययेनैव समभिव्याहाराद्भोजनादिसमानकालीनत्वं शयनादिक्रियया बोध्यते, अतो न सप्तमी । अन्यतस्तदनभिधान एव सप्तमी-विधानात् ।

॥ इति सप्तम्यर्थनिरूपणम् ॥

## अथ सम्बोधनम् ।

' चैत्र त्वया भुज्यता ' मित्यादौ " सम्बोधने च " इति प्रथमा साधीयसमेवाह । तच्च दवतुरत्वबहित्वशब्दजन्यबोधाश्रयत्वेनेच्छा । प्रथमार्थं शाब्दाश्रय निरूपताम्बन्धेन प्रकृत्यर्थविशेषणतया भानम् ।

अथ सम्बोध्यपदानं विनापि ' त्वया भुज्यता ' मित्यादिवाक्यार्थीनस्य चैत्रादेर्वाक्यार्थबोधस्य भोजनादिप्रवृत्तेश्च निर्वाहात् चैत्रेत्यादिप्रथमान्तपदप्रयोगोऽनर्थक इति चेन्न ; सम्बोध्यतानुमारकसाधारणाभिमुख्यादिहारेण विशिष्य चैत्रत्वावच्छिन्ने युष्मत्पदशक्तिग्रहनिर्वाहस्यैव तत्प्रयोजनत्वात् । चैत्रत्वा

* शयानश्चैत्रो भुक्तवानित्यपि पाठः ।

यदवच्छिन्ने सम्बोध्यत्वग्रहं विना सम्बोध्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नत्वाद्य ज्ञानपदस्य विशिष्य चैत्रत्वाद्यवच्छिन्ने शक्ते निर्वक्तुमशक्यत्वात् । न चैवमपि पदान्तरस्य न युष्मच्छब्दघटितं 'चैत्रात घटोऽस्ती' त्यादौ, तत्र सम्बोधनपदसार्थक्यं दुरुपपादमेवेति वाच्यम् ;—तत्रापि तत्तद्वाक्ये स्वीयथा र्थबोधायोच्चरितत्वरूपतात्पर्यनिश्चयार्थमेव तत्पदप्रयोगात् । तादृशतात्पर्यनि श्चयं विना श्रुतादपि तत्तद्वाक्याच्चैत्रादेः शाब्दबोधासम्भवात् । चैत्रस्याश्वान यनादिबोधाय मैत्रस्य च लवणानयनादिबोधायोच्चरितात् 'सैन्धवमानय' इति वाक्यादैकरूप्येण चैत्रमैत्रयोस्तत्तद्वाक्यार्थबोधवारणाय तदीयतदर्थबोधे तदीय तद्बोधार्थोच्चरितत्वरूपतात्पर्यनिश्चयस्य हेतुताया आवश्यकत्वात् । सङ्ख्यातिरिक्त सुबर्थः प्रकृत्यर्थविशेषणतयैव भासते इति नियमे सङ्ख्याभेदवत्सम्बोधनभेदो ऽपि निवेशनीयः ; अतः सम्बोधनस्य प्रकृत्यर्थविशेषणतया भानेऽपि न क्षतिः । सम्बोधनस्य प्रकृत्यर्थविशेष्यतयैव वा भानमुपेयम् । वस्तुतो नाम्ना र्थस्य प्रत्ययार्थसम्बन्धराकृत्येव क्रियान्वय इत्यनुरोधात्सुबर्थकर्मत्वादेः प्रकृत्यर्थविशे ष्यतयैव भानमुपेयते, न तूक्तनियमानुरोधेन, तथा नियमे मानाभावात् । सम्बो धनविभक्त्यर्थप्रकृत्यर्थस्यान्यत्र विशेषणतयाऽन्वयात्सम्बोधनस्य विशेष्यतया भानं निर्युक्तिकम् । इति कृतं विस्तरेण ।

॥ इति सम्बोधनविभक्त्यर्थनिरूपणम् ॥

## अथ स्त्रीप्रत्ययाः ।

प्रातिपदिकप्रकृतिकाः 'स्त्रियाम्' इत्यनेन विहिताष्टाबादयः क्वचित्स्त्रीत्वं प्रकृत्यर्थविशेषणतया बोधयन्ति— अजा, अश्वा, शूद्रा, श्यामा, चपला, ब्राह्मणी, गौरी, सुकेशी, गर्भिणीत्यादौ । स्त्रीत्वं च योनिमत्त्वम् । न च स्त्री परपदसाधुत्वार्थष्टाबादिप्रत्ययो न तु स्त्रीत्वं तदर्थः, क्वचित् स्त्रीत्वबोधश्च स्त्रीप्रत्ययप्रकृतिनामार्थनियतत्वरूपलिङ्गज एवेति वाच्यम् ; खट्वादौ व्यभिचा रेण तादृशहेतोः स्त्रीत्वासाधकत्वात् । प्राणित्वेन विशेषणेऽपि देवतादौ व्यभिचारात् ।

यद्यप्यजादिस्थलेऽपि अजा नास्तीत्यादिप्रयोगात्स्त्रीत्वस्य नञर्थान्वयितावच्छेदकतया भानमावश्यकम् ; अन्यथा पुंसाधारणजातिविशेषावच्छिन्नाभावस्य

बाधेन तादृशप्रयोगस्य प्रामाण्यानुपपत्तेः । न च प्रातिपदिकार्थ एव स्त्रीत्वम्, तस्य च तदर्थं एव जात्यादिमति विशेषणत्वेनान्वयः, स्त्रीप्रत्ययास्तु द्योतका एव ; अत एव-

" स्वार्थो द्रव्यञ्च लिङ्गञ्च सङ्ख्या कर्मादिरेव च ।
अमी पञ्चैव नामार्थास्त्रयः केषाञ्चिदिमाः ॥"

इति शाब्दिकानां कारिकापि सङ्गच्छते ; तत्र स्वार्थो जात्यादिरूपो गवादिपदमुख्यार्थः, द्रव्यं गवादिरूपस्तद्धर्मी ; तन्मते औपचारिको गवादि पदार्थः ; लिङ्गस्य प्रातिपदिकार्थत्वमावश्यकमेव, नान्यत्र ब्राह्मणोऽपि ब्राह्मणीत्यादौ पुंस्त्वबोधकपदान्तराभावेन तद्बोधानुपपत्तेः ; ब्राह्मणादिपदात् जात्यादेर्द्रव्यस्य च भानं नियतमेव, लिङ्गभानं तात्पर्ययोग्यताधीनं का- चित्कम्, ब्राह्मणीत्यादौ पुंस्त्वाद्यबोधादिति वाच्यम् ;—उक्तयुक्त्या पुंस्त्वस्य प्रातिपदिकार्थत्वे ऽप्यनन्तानां प्रातिपदिकपदानां स्त्रीत्व र्थकत्वे गौरवात्, ला- घवेनाल्पीयसां स्त्रीप्रत्ययानां तदर्थकत्वकल्पनौचित्यात् । अत एव स्त्रीत्वव्युदा- साय 'प्रातिपदिकार्थे'त्यादिसूत्रे लिङ्गग्रहणम् । अन्यथा प्रातिपदिकार्थ एव तदन्तर्भावेन पृथक् तदुपादानानुपपत्तेः ।

क्वचित्स्त्रीप्रत्ययः स्त्रीत्वं भार्यात्वेन प्रकृत्यर्थविशेष्यतया बोधयति— 'आ- चार्याणी, मानवी, शूद्री' त्यादौ । भार्यात्वं सम्बन्धविशेषः । तत्र च निरूपकत्वेन प्रकृत्यर्थान्वयः । खट्वाऽटवीदेवतादिपदे च स्त्रीप्रत्यया नार्थबोधकाः ; तत्र प्रकृत्यर्थे योनिमत्त्वरूपस्त्रीत्वस्यायोग्यतया ऽनन्वयात् । न च शब्दगतं स्त्रीत्वादिरूपधर्मा- न्तरमेव तत्र परम्परासम्बन्धेनार्थगततया भासत इति श्रीपतिदत्तोक्तं युक्तम्, तद्भाने मानाभावात् । "यूस्त्र्याख्यौ" इत्यत्र स्त्र्याख्यपदं स्त्रीलिङ्गशब्दपर- न तु स्त्रीत्वविशिष्टार्थकशब्दपरम् । तेनाटव्यादिशब्दानां स्त्रीत्वविशिष्टबोधकत्वे ऽपि न नदीसंज्ञानुपपत्तिः । अत एव श्रीभूप्रभृतीनां स्त्रीप्रत्ययान्तत्वाभावेन स्त्रीत्वविशिष्टबोधकत्वे ऽपि नदीसंज्ञाप्रसक्त्या 'नेयङुवङ्स्थानावि'ति निषेधस- ङ्गतिः । न चैव सेनान्ये स्त्रियै इत्यादावपि नदीसंज्ञा स्यात्, सेनान्यादि

यत्तस्य तत्र विशेष्यानिघ्नतया स्त्रीलिङ्गत्वादिति वाच्यम् ;—प्रयोगानुसारेण विशेष्यसमभिव्याहारानधीनायाः स्त्रीलिङ्गताया विवक्षणीयत्वादिति सङ्क्षेपः ॥

इति स्त्रीप्रत्ययविवेचनं समाप्तम् ।

---

# अथ तद्धितप्रत्ययाः ।

तद्धितप्रत्यया अपि नामप्रकृतिकाः क्वचित् प्रकृत्यर्थेन स्वार्थैकदेशस्य क्वचिच्च तेन स्वार्थस्यान्वयबोधं जनयन्ति । तत्र 'गार्गिः' इत्यत्रापत्यार्थविहिततद्धितार्थस्याऽपत्यस्यैकदेशे जन्यत्वे निरूपकतया प्रकृत्यर्थगर्गस्यान्वयः । 'गार्ग्यः' इत्यादौ तद्धितार्थगोत्रापत्यैकदेशपुत्रत्वघटकजन्यत्वे तथा तदन्वयः । 'गार्ग्यायणः' इत्यादौ तद्धितार्थस्य युवापत्यस्यैकदेशे जन्यत्वे गार्ग्यस्य "जीवति तु वंश्ये युवा" इति परिभाषितयुवार्थघटकजीवने च गार्ग्यादेरन्वयः, तेन गर्गादिजीवनकालीनो गर्गगोत्रापत्यस्यापत्यमर्थः— इति बोधः ।

'माञ्जिष्ठं वासः' इत्यत्र "तेन रक्तम्" इत्यर्थे तद्धितो विहितः । तत्सम्बन्धाधीनतदीयरूपारोपविषयत्वं तेन रक्तत्वम् । 'हारिद्रः पीतः' इत्यारोपमादाय हारिद्रादेरागेऽपि पीतिमाद्याश्रयहरितालादिरक्तत्वस्य वारणायाऽधिनात्तमारोपे विशेषणम् । पटादेः कुङ्कुमादिना रक्तत्वस्य वारणाय तदीयत्वं रूपविशेषणम् । अत्र च रागकरणस्य मञ्जिष्ठादेः प्रकृत्यर्थस्य तद्धितार्थैकदेशसम्बन्धे प्रतियोगितया रूपे चाश्रयतयाऽन्वयः ।

'शूल्यम्' 'उख्यम्' इत्यादौ तद्धितार्थसंस्कृतैकदेशे पाकादिरूपसंस्कारे शूलोखादेः प्रकृत्यर्थस्याधिकरणत्वेनान्वयः ।

'पौषी रात्रिः' इत्यादौ नक्षत्रयुक्तकालार्थे तद्धितः, कालस्य नक्षत्रयुक्तत्वं च तत्कालिकशशिभोगाश्रयत्वम् । तदेकदेशे शशिभोगे कर्मतया तत्र नक्षत्रान्वयः ।

'पौषो मासः' 'पौषो वर्षः' इत्यादौ "साऽस्मिन्" इत्यनेन विहितस्य तद्धितस्य पौर्णमासीघटितत्वावच्छिन्नोऽर्थः, पौर्णमास्यां प्रकृत्यर्थपौष्यादेरभेदेनान्वयः । पौषादिपदं च न केवलं यौगिकम्— पौषः पशुः

इत्यादिव्यवहारविरहात्, अतो रूढमपि। अत एव सूत्रे सप्तमीग्रहणम्। इति निरूपकतावच्छेदक च मासनिष्ठशुक्लप्रतिपदादिदर्शान्ततिथिसमुदायत्वम्, न तु किं शत्तिथिरूपमासत्वमात्रम्, यत्किञ्चित्तिथ्यवधिकत्रिंशत्तिथिसमुदाये मासव्यव-हारेपि चान्द्रसौरपौषादिबहिर्भूतपौष्यादिघटितत्रिंशत्तिथ्यन्तर्गततिथिषु पौषादिव्य वहाराविरहात्।

अथैवमपि सौरे पौषादिव्यवहारस्य निर्विवादतया धनुःस्थरविविशिष्ट स्वमेव न कथं पौषादिपदशक्यतावच्छेदकमुपेयत इतिचेत्?, न- सौर पौषादौ पौष्यादिपूर्णिमाया अलाभे योगरूढिलभ्यपौषपदार्थविलोपापत्तेः। न च तत्र रूढिमात्रमवलम्ब्यैव पौषादिव्यवहारः सौरपौषादौ मुख्य इति वाच्यम्, तथा सति योगार्थव्युत्पादनवैयर्थ्यात्।

अथ विलुप्यतां वर्षविशेषे पौषादिपदमुख्यार्थः, (व्यवहारः) का क्षतिः? तत्र लक्षणया सौरमासे पौषव्यवहारस्योपगन्तव्यत्वात्, स्थलपद्मादौ पङ्कजव्यवहारवदिति चेत्? तर्हि तत्र पौषादिपदमुख्यार्थमासनिमित्तकाऽऽह्निक श्राद्धादिविलोपप्रसङ्गः।

यथाश्रुतशूलपाणिग्रन्थानुसारिणस्तु— धनुरादिस्थरव्यारब्धशुक्लप्रतिपदादिद-र्शान्तेषु धनुरादिस्थरविसमाप्यमकरादिस्थरविसङ्क्रान्तिमन्मासभिन्नधनुरादिस्थर-व्यधिकरणशुक्लप्रतिपदादिदर्शान्तेषु वा पौषादिपदस्य रूढत्वमेव स्वीकुर्वन्ति न तु यौगिकत्वम्— "अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ" इतिवचनात्, पौषादिमासीय पौर्णमास्यां पुष्यादियोगस्यानियमात्। न च योगानादरे लाघवात् तथाऽपि स्थरविविशिष्टकालरूपसौरादिपदशक्तिरुचितेति वाच्यम्,— "या वैशाख्यां ऽमावास्या या रोहिण्या सम्बध्यते" इत्यादिश्रुतिबलाच्चान्द्र एव वैशाखा दिपदशक्तिसिद्धेः।

वस्तुतः "नक्षत्रेण युक्तः कालः" इत्यत्र नक्षत्रयोगयोग्यत्वमेव विवक्षितम्— पुष्यात्पुनर्वसुभ्यामपि पौषादिपूर्णिमाया पौष्यादिव्यवहारात्, अन्यथा

"माध्यां यदि मघा नास्ति" इत्यादेरसङ्गत्यापत्तेः । पुष्यादियोगयोग्यता च धनुरादिस्थरव्यावृत्तपक्षीयत्वं । तद्रूपाक्रान्तपौर्णमासीघटितरूढ्यौगलभ्यतावच्छेदकं नियतमेव पौषादेरिति नोक्तानुपपत्त्या यौगिकत्वनिराकरणसम्भवः पदानाम् ।

अथैवं निरुक्तरूपस्य पुष्याद्यघटिततया तेन रूपेण पूर्णिमाबोधकपौषादिशब्दानां यौगिकत्वप्रसक्तिरेव नास्ति, 'पौषी रात्रिः' इत्यादौ पुष्यादियोग एव प्रतीयते न तु निरुक्तयोग्यत्वम्— मकरादिस्थरव्यावृत्तधनुष्पक्षीयदृश्यादावपि तथा व्यवहारादिति "मघासेन युक्तः कालः" इत्यत्र योग एव विवक्षणीयो न तु योगयोग्यत्वमिति । पौर्णमास्या पौष्यादिपदस्य न यौगिकत्वसम्भव इति चेत् ? भवतु पौष्यादिपदं निरुक्तरूपावच्छिन्नपूर्णिमारूढमेव । पौषादिपदानां तद्योगपुरस्कारेण मासवाचकत्वे बाधकाभावाद् यौगिकत्वं कथं प्रत्याख्येयम् ? ।

न च "सास्मिन् पौर्णमासी" इतिसूत्रस्य 'अस्मिन् पौष्यादिपूर्णिमायोग्यता' इत्यर्थविवक्षया धनुरादिस्थरव्यावृत्तशुक्लप्रतिपदादिदर्शान्ते तद्धितान्तसमुदायरूढिग्राहकतयापत्तौ योगरूढिस्वीकाराऽनुचित इति वाच्यम्, एवं रूढिपक्षे समुदायशक्यतावच्छेदकशरीरे आरम्भावधिविशेषणप्रक्षेपेण गौरवात्, पौषादिमासादिनामपदानां गुरुधर्मावच्छिन्नशक्तिकल्पनमपेक्ष्य "सास्मिन्" इत्यर्थेऽणः प्रत्ययस्यैव शक्तिकल्पनाधिक्यस्योचितत्वात् ।

न च योगरूढिपक्षे पौषादिपदानां योगार्थरूढ्यर्थाभेदान्वयबोधजनकत्वकल्पनाधिक्येन गौरवमिति वाच्यम्, अन्यमतेऽपि तत्तदर्थे यौगिकरूढत्वभ्रमदशायां इति च तत्तदर्थाभेदान्वयस्य तथान्वयबोधस्य दुरपह्नवतया तत्र तादृशबोधहेतुताकल्पनस्यावश्यकत्वादिति दिक् ।

'वैष्णवी ऋक्' 'ऐन्द्रं हविः' इत्यादौ देवताणोऽन्तद्धितस्य तद्देवताकत्वमर्थः । मन्त्रस्य तद्देवताकत्वं तदुद्देश्यकत्यागकरणत्वेन वेदबोधितत्वम् ।

अथ मन्त्रस्य त्यागकरणत्वं बोधितमेव— विनापि मन्त्रमिच्छाविशेषरूपस्य तस्योत्पत्त्या व्यभिचारात्, इष्टसाधनताज्ञानघटितकारणसामग्र्या अन्यथासिद्धत्वाच्चेति मन्त्रस्य करणता कथं वेदो बोधयेत् ? बोधयन् वा प्रमाणं भवेत् ? सत्यम्— मन्त्रस्य त्यागकरणत्वं त्यागाङ्गोच्चारणकत्वं न तु तज्जनकत्वम्, अतो न दोषः । हविषस्तद्देवताकत्वं च तदुद्देश्यकत्यागकर्मत्वम्— त्यागोद्देश्यताया एव तद्देवतापदार्थत्वात् न चैवं भूतादिदेवतादानीयस्य घृतादिद्रव्यस्यापत्तिः, उद्देश्यपदेन वेदबोधितद्रव्यस्वामित्वपरित्यागविषयताया एव विवक्षितत्वात् सम्प्रदाने च स्वामित्वस्याबोधितत्वात् ।

न च त्यागोद्देश्यतायाश्चतुर्थ्यापि बोधनात् तद्धितचतुर्थ्योर्देवतात्वबोधकतायामविशेषात्–

' तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः ।
देवतात्वज्ञप्तिरत्र दुर्बलं तु परं परम् ॥ "

इत्यनेन विरोध इति वाच्यम्, त्यागोद्देश्यताया वेदमेयत्वस्याधिकस्य निवेशनीयतया चतुर्थ्या तदंशाऽबोधनेन तस्योपायान्तरबोध्यतया चतुर्थ्यधीनदेवतात्वबोधस्य विलम्बिततया तद्धितापेक्षया चतुर्थ्या जघन्यतोपपत्तेः । देवतार्थविहिततद्धितेन तु देवतात्वघटकस्तदंशस्यापि बोधनात् ।

अथ चतुर्थ्या वेदमेयत्वांशस्य साक्षादबोधनेपि त्यागोद्देश्यत्वस्य साक्षाद्बोधनेन पित्रादीनां साहित्यावच्छिन्नानाम्, " पितृभ्यो दद्यात् " इति चतुर्थ्यधीनत्यागोद्देश्यत्वबोधस्य " पितरो देवता " इति तद्धितसमानार्थकदेवतापदाधीनत्यागोद्देश्यत्वबोधापेक्षयाऽविलम्बितत्वेन " साहित्यावच्छिन्नानां निर्वेशानां वा श्राद्धोद्देश्यत्वम् " इत्यत्र चतुर्थ्यपेक्षया देवतापदस्य बलवत्त्वेन शूलपाणिपर्यालोचितं विनिगमकं न सङ्गच्छते इति चेत् ?, न– " पितृभ्यो दद्यात् " इति चतुर्थ्या साहित्यावच्छिन्नस्य त्यागोद्देश्यताबोधे तस्य वेदसमानार्थकस्मृतिवाक्यजन्यत्वग्रहे सत्येवाऽप्रामाण्यशङ्कानुदयः । तादृशग्रहश्च विलम्बितः । देवतापदात् त्यागोद्देश्यताबोधश्च सर्वदेशस्थ वेदवाक्यावगाहित्वनिश्चयप्रामाण्यशङ्काव्युदासाय न तदपेक्षते– स्वस्यैव तादृशदेवतात्वबोधेऽप्रामाण्यव्यावर्तकवेदजन्यत्वावगाहित्वात्, अप्रामाण्यशङ्काकलङ्कितश्च बोधो न तोषयेदकिञ्चित्कर इति देवतापदस्य झटिति निश्चीयमानप्रामाण्यबोधजनकतया बलवत्त्वेन विनिगमनाया उपपत्तेः ।

एवं श्राद्धार्थावाहनप्रकाशकात् " पितरः " इत्यादिमन्त्राद्बहुवचनोपस्थापितसाहित्यावच्छिन्नाऽऽवाहनबोधेन साहित्यावच्छिन्नानां श्राद्धदेवतात्वलाभेपि मन्त्रलिङ्गस्य विध्यबाधकतर्कादिसापेक्षतात्पर्यनिश्चयाधीनतया दुर्बलतया "पितरो देवता" इत्यपेक्षया दुर्बलतेति बोध्यम् ।

' कापोतम् ' ' राजकम् ' ' जनता ' इत्यादौ समूहार्थविहितस्य तद्धितस्य पर्याप्तसमुदायत्वावच्छिन्नोऽर्थः, पर्याप्तौ प्रकृत्यर्थकपोतत्वाद्यवच्छिन्नस्यान्वयः । कपोतशुकसारिकादिपर्याप्तसमुदाये यस्य पर्याप्तिश्च न न्यूनवृत्तिकपोतत्वादिनाऽवच्छिद्यते । अतो न तादृशसमुदाये कापोतादिव्यवहारः । पर्याप्त्यवच्छेदकत्वे चाऽन्यूनवृत्तित्वमेव तन्त्रं न त्वनतिरिक्तवृत्तित्वमपि । अन्यथाऽऽकाशत्वादेरिव घटत्वादेरपि द्वित्वादिपर्याप्त्यवच्छेदकत्वं न स्यात् ( तथा च ) ' आकाशौ ' इतिवत् ' घटौ ' इत्यपि न स्यात् । इत्थं च कपोतमात्रवृत्तिशतत्वादिपर्याप्त्यतिरिक्तपर्याप्त्यनवच्छिन्नत्वानिर्वाहात् कपोतशतादावपि कापोतादिव्यवहारोपपत्तिः । पर्याप्त्यतिप्रसक्तधर्मस्य तदनवच्छेदकत्वे मतान्तरं चिन्तनीयम् ॥

॥ इति तद्धितप्रत्ययार्थविवेचनं समाप्तम् ॥

# ॥ अथ धातुप्रत्ययाः ॥



धातुप्रकृतिकाश्च लकारकृत्सन्यङ्णिच्प्रभृतयः प्रत्ययाः केचिद्धात्वर्थान्वितमधिकमर्थं ब्रुवते । अर्थान्तरमनभिदधानाश्च केचिदाकाङ्क्षानिर्वाहकतया प्रकृतिभिः स्वीयार्थबोधन एवोपकुर्वते । तत्र लडादिदशलकाराणां "लः कर्मणि च भावे चाऽकर्मकेभ्यः" इति सूत्रेण कर्तृकर्मभावेष्वनुशिष्टानां कर्तृत्वसामान्यमर्थः — तावन्मात्राभिधानेनैव प्रथमान्तपदोपस्थाप्ये विशेषणतया तदन्वयेन कृतिविशिष्टस्य कर्तृबोधनिर्वाहात् । लकारस्य तद्बोधकतया न "लः कर्मणि" इतिसूत्रविरोधः—बोधकताया एव तत्र सप्तम्यर्थत्वात् । न तु वाचकतायाः, गौरवेण विशिष्टधर्मिणि शक्तेरबोधात् । 'चैत्रः पचति' इत्यादौ लकारे प्रथमान्तपदसामानाधिकरण्यप्रवादस्याऽपि, तेन तदर्थान्वितस्वार्थबोधपरत्वामात्रेऽपि कथञ्चिदुपपादनसम्भवात् ॥

तृतीयायाः साधुतानियामकं लकारादिना कर्तुरनभिधानमपि कर्तृत्वविशिष्टाऽबोधनमेव न तु विशिष्टशक्त्या विशिष्टाऽबोधनपर्यन्तम् । अतो विशिष्टस्य लकाराऽवाच्यत्वेऽपि 'चैत्रः पचति' इत्यादौ न तृतीयापत्तिः—अन्वयबलेन विशिष्टबोधात् । 'चैत्रः पक्ता' इत्यादौ कृत्प्रत्ययस्य धर्मिणि शक्तावपि न क्षतिः । शक्त्यैव विशिष्टबोधसाधारणबोधस्यैवाऽनभिधानपदार्थप्रतियोगित्वात् । "अनभिहिते कर्तरि तृतीया" इत्यनुशासनेऽपि सप्तम्यर्थो बोध्यत्वमेव; तथा च 'चैत्रेण पच्यते' इत्यादौ तृतीयार्थकर्तृत्वस्य प्रकृत्यर्थविशेष्यतयैव भानाच्च कर्तृत्वविशिष्टधर्मिबोधकत्वमिति सूत्राऽविरोधः ।

यदि च तत्र कर्त्रादिपदं धर्मपरम्, तथा च समभिव्याहृतलकाराद्यनभिहितं कर्तृत्वं तृतीयार्थ इति सूत्रार्थः, 'चैत्रेण पच्यते' इत्यादौ कर्तृत्वस्य तृतीयामात्रार्थत्वाल्लकारेण तदनभिधानं सुघटमित्युच्यते ? तदा तत्रानभिधानशब्दार्थो भवतैव निर्वक्तव्यः, न तावदप्रकृत्वं तदर्थः—लका,

नैवम् — " अनभिहिते कर्तरि तृतीया " इत्यस्य ' कर्तृत्वविशेष्यतया प्रातिपदिकार्थेऽविवक्षिते सति तृतीया ' इत्यर्थः, ' प्रातिपदिकार्थविशेषणतयैव कर्तृत्वेऽविवक्षिते ' इत्याशयः, असाधारणतया च ' प्रातिपदिकार्थविशेष्यतया कर्तृत्वे विवक्षिते तदुपरि तृतीया ' इति पर्यवसितम् ।

अतएव ' चैत्रः पचति ' इत्यादावाख्यातेन कर्तृत्वबोधनात् " उक्तार्थानामप्रयोगः " इतिन्यायात् तृतीयाप्राप्तिविरहात् ' प्रातिपदिकार्थान्वयितया कर्तृत्वविवक्षायां ' इत्येव सम्यक् । किं विशेष्यतयाऽन्वयित्वपर्यन्तनिवेशनेनेति " अनभिहिते " इत्यनुवृत्तिफल्गुता—तावत्पर्यन्तलाभस्यैव तदनुवृत्तिफलत्वादिति नाशङ्क्यम्, ' संख्यातिरिक्तसुबर्थे च प्रकृत्यर्थविशेष्यतयैवान्वयः ' इति व्युत्पत्तिमूलकत्वेन विशेष्यतयाऽन्वयित्वपर्यन्तस्यावश्यं विवक्षणीयत्वात् । यथाश्रुतसूत्रार्थानुरोधेन कर्तरि लकारतृतीयाविभक्त्योः शक्तिवादिभिर्वैयाकरणैरपि ' प्रातिपदिकार्थविशेष्यतया कर्तरि विवक्षिते तृतीया ' इत्येव सूत्रार्थो वाच्य, अन्यथा ' चैत्रेण पच्यते ' इत्यादौ कर्तुरनभिधानस्योक्तरूपेण कर्तृत्वानभिधानत्वदुर्वचत्वापत्तेरित्यलमधिकेन ।

अथ " अनभिहिते कर्तरि तृतीया " इत्यस्योक्तार्थकत्वे, चैत्रादिकर्तृकत्वविशेषितपाकादिविवक्षया ' चैत्रेण पचति ' इत्यादिप्रयोगापत्तिः, न च परस्मैपदार्थकर्तृत्वान्वयिविशेष्यविरहान्न तथा प्रयोगः— विशेष्यतयापि कर्तृत्वबोधसंभवात् चैत्रमैत्रोभयकर्तृकपाकस्थले "चैत्रकर्तृकपाककर्ता मैत्र" इत्यन्वयतात्पर्येण ' चैत्रेण पचति मैत्रः ' इति प्रयोगस्य दुर्वारत्वं च ।

न च कर्तृत्वातिरिक्ते विशेषणतापन्नायां, कर्तृत्वे वा विशेषणतानापन्नायामेव क्रियायां तृतीयार्थकर्तृत्वान्वयो व्युत्पन्न इति वाच्यम्, ' चैत्रेण पाचयति मैत्र ' इत्यादौ ण्यर्थकर्तृत्वविशेषणतापन्ने पाकादौ चैत्रादिकर्तृक

र्थान्वयेन तादृशव्युत्पत्तेरसिद्धेः । न च लकारार्थकर्तृत्वविशेषणतानापन्न क्रियाविशेषणतया कर्तृत्वबोधकत्वं सुपां व्युत्पन्नमिति न काप्यदोष इति वाच्यम् , उक्तस्थले ' चैत्रेण पक्वान् गैत. ' इति प्रयोगापत्तेः ।

नैवं-आश्रयातिरिक्ताविशेषणतापन्नकर्तृत्वविशेषणतानापन्नक्रियायामेव विशेषणतया कर्तृत्वं तृतीयया बोध्यते इति नियमः ' चैत्रेण पाचयति ' इत्यादौ कर्तृत्वनिर्वाहकव्यापारो णिजर्थस्तत्राश्रयातिरिक्ते व्यापारे विशेषणं कर्तृत्वमिति तद्विशेषणतापन्नक्रियायां तृतीयार्थकर्तृत्वविशेषणत्वे न किञ्चिद्बाधकम् । ' चैत्रेण पचति मैत्रः ' इत्यादयश्च न प्रयोगा.—तत्राश्रय एव कृतेर्विशेषणतया तद्विशेषणतापन्नक्रियायां तृतीयया कर्तृत्वबोधस्याऽसंभवात् । कृतिविशेष्यकबोधाभिप्रायेण ' चैत्रेण पचति ' इतिवारणायाऽऽश्रयविशेषणत्वमुपेक्ष्याऽऽश्रयातिरिक्ताऽविशेषणत्व निवेशितम् । " अनभिहिते कर्तरि तृतीया " इत्यस्यापि निरुक्तक्रियाविशेषणतया प्रातिपदिकार्थान्वयिकर्तृत्व विवक्षया तदुत्तरं तृतीया भवति' इत्येवार्थ इति दिक् ।

कर्तृत्वं च ' चैत्रः पचति ' इत्यादौ क्रियानुकूला कृतिरेव । तस्याश्चाऽनुकूलकृतित्वेन कृतित्वमात्रेण वाऽऽख्यातवाच्यता । ' रथो गच्छति ' ' काष्ठं पचति ' इत्यादौ च क्रियानुकूलव्यापाररूपे कर्तृत्वे निरूढलक्षणा । कृतित्वजातेः प्रवृत्तिनिमित्तत्वं लाघवात् ।

मीमांसकास्तु — व्यापारत्वेनैव शक्तिः — ' पचति ' इत्यादावपि तेनैव रूपेण बोधोपगमात् । एवं चाऽचेतनेपि प्रयोगो मुख्य एव । कृतित्वस्य लाघवं चाऽकिञ्चित्करम् । यत्र लघुगुरुरूपाभ्यां बोधो निर्विवादस्तत्रैव लघुरूपावच्छिन्ने शक्त्युपगमात् । तथापि तदवच्छिन्ने शक्त्युपगमे तत्राऽमुख्यार्थानादितात्पर्यकल्पनायां गौरवात् । एवं ' बीजादिनाऽङ्कुरः कृतः ' इत्यादौ विनापि यत्नं कृञः प्रयोगात् तस्यापि व्यापारसामान्यार्थकता, अतः करोतिविवरणीयार्थकत्वेपि नाख्यातस्य यत्नत्वावच्छिन्नवाचकता

न वा 'किं करोति ?' 'पचति' इति प्रश्नोत्तरयोः समानप्रकारकबोध जनकत्वानुरोधेन तत्कल्पम्।

अत्र केचित्—'पचति' इतिवाक्यजन्यबोधे सति यत्नत्वावच्छिन्ने वर्तमानत्वसंशयानुदयात् तत्र यत्नत्वावच्छिन्ने वर्तमानत्वबोधकत्वसिद्धौ तदवच्छिन्ने शक्तिर्लाघवात् सिद्ध्यति। न हि यत्नाऽविनाभूतक्रियाविशेष लिङ्गकानुमानलभ्येन यत्नत्वावच्छिन्नेन समं वर्तमानत्वान्वयबोधकत्वमा ख्यातस्यार्थाध्याहारमतेऽपि संभवति-लडादिजन्यवर्तमानत्वान्वयबोधे लडा दितत्समभिव्याहृतपदान्यतरजन्यविशेष्योपस्थितेः कारणताया आवश्यक त्वात्, अन्यथा निराकाङ्क्षयत्नादिपदमात्रात्यत्नाद्युपस्थितावपि तत्र वर्तमान त्वादेर्लडादितो बोधप्रसङ्गात्।

न चार्थाध्याहारादिना 'द्वारं पिधानं श्रुति.' इत्यादितो द्वारक र्मकश्रुतेरिव 'पचति यत्नः' इत्यादितः 'पाकयत्नो वर्तमान.' इत्या द्याकारको वर्तमानत्वादेर्बोध इष्ट एवेति वाच्यम्, परस्परसाकाङ्क्षपदार्थद्व यान्वयबोध एवाऽध्याहृतस्यैव निराकाङ्क्षपदादुपस्थितस्याऽर्थस्य विषयता यास्तैरुपगमात्, तत्रान्वयानुभावकसाकाङ्क्षपदसत्त्वात्, प्रकृते चान्वयबोध स्याऽऽकाङ्क्षानुपयोगिपदार्थद्वयविषयकत्वेन तेषामप्यसम्मतत्वात्। तत्स्वी कारे निराकाङ्क्षस्याप्यनुभावकत्वस्वीकारापत्ते, शाब्दबोधे आकाङ्क्षानुर योगप्रसङ्गश्चेति। तत्र तत्र तात्पर्यलिङ्गेन यत्नत्वावच्छिन्ने वर्तमानत्वानु मितेरेवोपगमात्। तादृशवर्तमानत्वप्रतीतौ शाब्दत्वप्रतीते सविवादत्वा दित्याहु।

अत्र नैयायिका — 'रथो गच्छति' इत्यादावाश्रयत्वमेवाख्या तार्थो न तु व्यापार —अन्यदीयगमनानुकूलनोदनादिलक्षणव्यापारवति 'गच्छति' इत्यप्रयोगात्। एवं च 'काष्ठं पचति' इत्यादिप्रयोग एव व्यापारशक्तिमाख्यातस्य साधयेद्यदि स्वारसिकः स्यात्; तदेव न,

न हि 'चैत्र पचति' इत्यादिप्रयोगेण 'काष्ठं पचति' इत्यादिप्रयोगस्याविशेष । एवमचेतने स्वरसत कर्तृपदाप्रयोगात् कृत्यपि यत्नत्वविशिष्टार्थे । एवम् ' चैत्र एव पचति पाककर्ता न त्वचेतन काष्ठादि' इत्यादिप्रयोगात् लकारस्य कृतश्च यत्नत्वविशिष्टार्थकताया, आवश्यकत्वालाघवात् तत्रैव शक्ति । व्यापारे लक्षणेति ।

न च यत्नत्वस्याख्याताथाच्यानिवृत्तिजीवनयोनियत्नसाधारणतया लकारशक्यतावच्छेदकत्वाऽसंभव इति वाच्यम्, निवृत्त्यादियत्नस्याख्यातवाच्यत्वानुपगमे क्षतिविरहात् , निवृत्त्यादे पाकानुकूलताविरहेण तत्काले 'पचति ' इति प्रयोगापत्तिविरहात् । इष्टसाधनताज्ञानजन्यतावच्छेदकप्रवृत्तित्वजातेरेव धात्वाख्यातपदप्रवृत्तिनिमित्तत्वमुपगम्यते, अत एवेश्वरकृते जन्यमात्रजनकत्वेऽपि, ' ईश्वर पचति ' ' ईश्वरो भुङ्क्ते ' इत्यादयो न प्रयोगा । 

न चैव ' ईश्वरो वेद वक्ति ' ' मथुराया कृष्णो विहरति ' इत्यादिप्रयोगानुपपत्ति , अत्राख्यातस्य लक्ष्यार्थव्यापारबोधकतोपगमात् । ईश्वरकृतिसाधारणधर्मस्याऽऽख्यातप्रवृत्तिनिमित्तत्वेऽपि तत्र व्यापारलक्षणाया आवश्यकत्वात् , तथा हि— ' आत्मा पचति ' ' शरीर पचति ' इत्यादिस्वारसिकप्रयोगविरहादाख्यातार्थकृतेरुद्देश्यतावच्छेदकशरीरविशेषाऽवच्छेदेन समवायेनाऽन्वयनियम स्वीकरणीय — चैत्रादिपदस्य शरीरविशेषविशिष्टात्मपरतया ' चैत्र पचति ' इत्यादौ शरीरविशेषात्मकोद्देश्यतावच्छेदकावच्छेदेनात्मनि समवायेनान्वयसम्भवात् । ' गौर पचति ' इत्यादावपि गौरादिपदस्य गौरशरीरावच्छिन्नात्मनि आख्यातस्यैव वा व्यापारे लक्षणोपगमात् । एव चेश्वरकृते शरीरानवच्छिन्नत्वादुक्तस्थले कृतेस्तथान्वयासम्भव इति व्यापारलक्षणाऽऽवश्यकी ।

ईश्वरकृतिसाधारणयत्नत्वावच्छिन्न एव आख्यातार्थ, असाधारणानुकूलत्व हि यत्ने क्रियायाः सम्बन्धतया भासते न त्वनुकूलतामात्रम्— असाधारणानुकूलताया एवाकाङ्क्षानिरूपकत्वोपगमात् । अतोऽस्मदादिकर्तृकपाकादिक्रियानुकूलकृतिमादाय, न 'ईश्वरः पचति' इति प्रयोगः । वेदवचनादौ चेश्वरकृतेरेवाऽसाधारणकारणत्वात् 'ईश्वरो वेदं वक्ति' इत्यादयः प्रयोगा इत्यपि केचित् ।

अथ कृतेराख्यातस्य कृञश्च वाच्यत्वे 'करोति' इत्यादौ कृतेर्द्विधा भानं स्यात्— धातुप्रत्यययोर्द्वयोः कृतिबोधकत्वादिति चेत्', न— 'एकः' 'द्वौ' इत्यादावेकत्वद्वित्वादिबोधकप्रकृतिप्रत्यययोरुभयोरप्येकैवैकत्वादिधीवत् प्रकृतेऽपि बाधकाभावात्, तत्र विभक्तेः साधुत्वार्थकत्वे प्रकृतेऽपि तथात्वात् ।

अथ तर्हि 'करोति चैत्रः' इत्यादौ प्रातिपदिकार्थे साक्षादेव कृत्यन्वयः स्यात् । स च नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयस्याऽव्युत्पन्नत्वात् न सम्भवति, नामार्थधात्वर्थयोः साक्षादन्वयोपगमे कर्मतादिबोधकविभक्तेरसत्त्वेऽपि 'तण्डुलः पचति' इत्यादौ कर्मतादिसम्बन्धेन तण्डुलादेः पाकादावन्वयसम्भवेन तादृशवाक्यात् तण्डुलकर्मकपाकादिबोधापत्तेः । न च प्रातिपदिकार्थप्रकारकक्रियान्वयबोध एवाऽव्युत्पन्नो न तु क्रियाप्रकारकप्रातिपदिकार्थविशेष्यबोधोऽपीति वाच्यम्, 'घटः करोति' इत्यादितः कर्मतादिसम्बन्धेन कृत्यादेर्घटादावन्वयाभावात्, क्रियाप्रकारकनामार्थविषयकबोधस्याऽव्युत्पन्नत्वादिति चेत्', न उक्तातिप्रसङ्गवारणाय धातोः कर्मतादिसम्बन्धेन क्रियान्वयाऽबोधकत्वव्युत्पत्तेरुपगमावश्यकत्वात्तत्सम्बन्धेन कृत्यादिरूपक्रियान्वयाऽबोधकत्वव्युत्पत्तेरित्यदोषात् ।

न च तादृशातिप्रसङ्गवारणाय धातुजन्यकृत्यादिप्रकारकान्वयबोधे प्रत्ययजन्यविशेष्योपस्थितेर्हेतुता वाच्या, तादृशकारणाभावात् प्रातिपदिकार्थे

विशेष्यकबोधोऽपि न संभवतीति वाच्यम्, कर्मत्वादिसंबन्धेन कृत्यादिप्रकारकबोधस्याऽप्रसिद्ध्या सामग्रीकल्पनेनाऽऽपादकाभावात् तादृशकारणताया अकल्पनात्।

न च 'क्रियते चैत्रः' इत्यादौ कृत्यादिप्रकारकान्वयबोधवारणायैवोक्तकारणताकल्पनमावश्यकमिति वाच्यम्, सति तात्पर्ये इष्टत्वात्। कर्तृविशेष्यकान्वयबोधपरधातूत्तरयकोऽसाधुत्वादेव प्रामाणिकानां न तथा प्रयोगः। 'करणं चैत्रः' इत्यादौ चैत्रादौ धात्वर्थकृतेराश्रयतासंबन्धेनाऽन्वयबोधवारणाय तादृशकार्यकारणभावकल्पनमित्यपि न— तादृशाऽन्वयबोधे आख्यातान्तधातुनामसमभिव्याहारज्ञानहेतुतयैवोक्तस्थले तादृशबोधवारणसंभवात्।

दीधितिकृतस्तु— 'गच्छति' 'जानाति' 'करोति' इत्यादावाख्यातस्याश्रयत्वे निरूढलक्षणायाः स्वीकारान्न नामार्थे क्रियायाः साक्षादन्वय इत्याहुः। तन्मते यद्यप्याश्रयत्वसंबन्धस्याधिकस्य 'जानाति चैत्र' इत्यादिवाक्यजन्यबोधविषयताकल्पनेन गौरवं तथापि यत्र ज्ञाधातोर्ज्ञानाद्याश्रयत्वे लक्षणाग्रहः शक्तिभ्रमो वा तत्र चैत्रादिविशेष्यको ज्ञानाद्याश्रयत्वप्रकारको बोध आश्रयतायाः संसर्गतावादिनामप्यनुमतः। चैत्रादिविशेष्यकाश्रयतासंसर्गकज्ञानादिप्रकारकशाब्दबोधस्तु दीधितिकारमते क्वचिदपि न प्रसिध्यतीति तादृशशाब्दबोधे योग्यताज्ञानादेर्हेतुताकल्पनं तथाविधशाब्दबोधाङ्गीकर्तुर्मणिकारस्य मते आवश्यकमिति गौरवम्।

वस्तुतस्तु— 'चैत्रेण ज्ञायते घटः' इत्यादौ कर्मप्रत्ययस्थले यावतां पदार्थानां प्रकारता तावतां 'चैत्रो जानाति घटम्' इत्यादिकर्तृप्रत्ययस्थले तथात्वं परं तु विशेष्यविशेषणभाववैपरीत्यम्, एवं कर्मप्रत्ययस्थले यस्य ससंबन्धिकपदार्थस्य यदंशे विशेष्यता कर्तृप्रत्ययस्थले तन्निरूपकतायास्तदंशे प्रकारतेत्यनुभवस्य दुरपह्नवत्वाभिप्रायेणाऽऽश्रयत्वस्या

ण्यात्‌।धेत्ता दीधितिकार उदाहरत्‌। 'चैत्रेण ज्ञायते' इत्यत्राधेयत्व रूपतृतीयार्थस्य चैत्रविशेषणत्वात्‌ 'चैत्रो जानाति' इत्यत्राधेयत्वानि रूपकत्वरूपाधारतामाश्रित्याऽप्रकारत्वे तादृशानुभवविरोधात्‌।

न च 'चैत्रेण ज्ञायते' इत्यत्राप्याधेयत्व संसर्ग एव न तु वि शेष्यमिति वाच्यम्‌, तथ सति 'आत्मना ज्ञायते न घटेन' इत्यादौ घटादिवृत्तित्वाभावबोधानुपपत्ते — आधेयत्वस्य तृतीयार्थताविरहेण तृतीया न्तात्‌ घटादिवृत्तित्वस्याप्रतीत्योऽनुपस्थिते, आधेयत्वसम्बन्धस्याभावप्रतियो गितानवच्छेदकतया च ससम्बन्धावच्छिन्नघटाभावबोधस्य तत्रोपगमास भवात्‌। तादृशसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वे 'ज्ञाने न घट' इत्यादिवाक्यजन्यप्रत्यये ज्ञानाधिकरणकतादृशसम्बन्धावच्छिन्नघटाभाव स्याप्यवगाहनसम्भवात्‌ 'घटे ज्ञानं न वा' इत्यादिसंशयनिरासाय कदा चित्‌ 'ज्ञाने न घट' इत्यादिकमपि प्रयुज्येत। अत एवानुकूलकृतिम त्त्वादिरूपकर्तृत्व देऽपि 'चैत्र पचति' इत्यादौ प्रकारता मणिकृताऽपि स्वीक्रियते न तु संसर्गता — 'न पचति' इत्यादावन्वयबोधाऽनिर्वा हात्‌। तादृशसम्बन्धस्य वृत्त्यनियामकतयाऽभावप्रतियोगितानवच्छेदकत्वेन तत्सम्बन्धावच्छिन्नक्रियाविरहप्रत्ययस्य तत्रोपगमासम्भवात्‌।

एवम्‌— 'चैत्रेण ज्ञायते' इत्यादावाधेयत्वस्य तृतीययाऽभिध क्षणे प्रातिपदिकार्थमात्रविवक्षया तद्विषयानुशिष्टप्रथमैव स्यात्‌। 'जानाति चैत्र' इत्यादौ चाख्यातेन कर्तृत्वा विवक्षणे धात्वर्थफलमात्रमानपरतया परस्मै पदस्य शाविविकरणस्य च ऽसाधुत्वपत्ति — "भावकर्मणो" इत्या त्मनेपदविधायकानुशासनविषयत्वात्‌, "कर्तरि" इत्यधिकारीयकत्वा दिभ्य श्नयनुशासनाविषयत्वान्नेति तत्राख्यातस्य कर्तृत्वबोधकतायुक्तिस्तु न सर्वीयसी — इतराविशेषणतया क्रियाबोधपरकत्वभावविवक्षाया आत्म

नेपदानुशासनविषयत्वोपगमादुक्तस्थले परस्मैपदसाधुतायाः, तादृशभावनिश्चया-
दिविरहस्य श्याद्यनुशासनविषयत्वोपगमेन श्यादिविकरणस्य साधुतायाश्च
निर्वाहसंभवात् ।

'पचन् पचति' इत्यादावितोद्देश्यतावच्छेदकविधेयाऽभेदेन 'जानन् जानाति' इत्यादेर्निराकाङ्क्षतानिर्वाहायापि 'जानाति' इत्यादावाख्यातस्याश्रयतार्थकतोपगम आवश्यकः, अन्यथा कृदन्तप्रतिपाद्यतावच्छेदकज्ञानाश्रयत्वरूपोद्देश्यतावच्छेदकस्य ज्ञानादिरूपविधेयाभिन्नतया निराकाङ्क्षताविरहेण तथा प्रयोगापत्तेः । एतेन तत्राश्रयताया प्रकारतोपगमे 'जानाति चैत्रः' इत्यादिवाक्यज्ञानघटितशाब्दसामग्र्या भिन्नविषयकप्रत्यक्षादिप्रतिबन्धकतायामाख्यातजन्याश्रयत्वोपस्थित्यादिरूपाधिककारणान्तर-निवेशे गौरवेणाश्रयतायाः संसर्गत्वमेवोचितमित्यादिकमनुपादेयम् ।

'नश्यति' इत्यादौ प्रतियोगित्वरूपकर्तृत्वमाख्यातार्थः, तादृशसम्बन्धस्य वृत्त्यनियामकतयाऽभावप्रतियोगितानवच्छेदकत्वेन 'न नश्यति' इत्यादौ नाशप्रतियोगित्वाभावबोधस्यैव स्वीकरणीयतया न संसर्गतासंभवः ।

अथाख्यातस्य कर्तृत्वशक्ततावच्छेदकं रूपं दुर्वचम् । न च तिङ्त्वं तथा; तिप्समादिसाधारणतिङ्त्वस्य दुर्वचत्वात् । न च पाणिनीयसङ्केतसम्बन्धेन तिङ्पदवत्त्वमेव तिङ्त्वम्, तिबाद्यष्टादशसु तत्पदसङ्केतग्राहकं च "आदिरन्त्येन" इतिसूत्रमेव, तत्सङ्केतमविदुषामनधीतपाणिनीयतन्त्राणां तिबादिना शक्तिभ्रमादेव शाब्दबोध इति वाच्यम्, एवं सति घटादिवाचकघटादिपदेष्वपि कस्यचिच्छब्दस्य पुरुषविशेषीयसङ्केतसंभवेन तुल्ययुक्त्या तत्रापि तच्छब्दस्यैव शक्ततावच्छेदकतापत्त्या तिबादिषु पाणिनेस्तिङ्पदसङ्केतवत् तत्र शब्दान्तरसङ्केतस्याप्यन्यपुरुषीयस्य संभवात् तद्व-च्छब्दानामपि प्रवृत्तिनिमित्ततायाः सुवचत्वाद्विनिगमनाविरहात् ।

अत्र केचित् — तिबादिस्थानिनो लकारस्यैव लत्वजातिपुरस्कारेण कृतिवाचकता, 'पचति' इत्यादौ लकाराऽश्रवणेऽप्यादेशेन तिबादिना स्थानिन स्मरणात् तत एवार्थोपस्थितिः । आदेशादेशिभावमविदुषा तु तिप्त्वादिना शक्तिभ्रमादेवार्थोपस्थितिः । यत्र तिबादेर्लादेशित्वज्ञानं नास्ति अतल्लकाराद्यर्थोपस्थितिस्तत्र 'पचति' इत्यादिवाक्याच्छाब्दबोधवारणाय 'पचति' इत्याद्यानुपूर्वीज्ञानजन्यबोधे तिबादेर्लादेशत्वज्ञानमपि हेतुः । न चोक्तस्थले धातुसाकाङ्क्षत्वज्ञाने भवत्येव शाब्दबोधस्तदसत्त्वे च कारणाभावादेव नापत्तिरिति वाच्यम्, 'पचति' इत्यादौ तिबादिना लकारस्योपस्थापनेऽपि तत्तद्धातुसाकाङ्क्षतया तत्स्मारकाभावेन तच्छाब्दबोधानुपपत्तेः — लकारे धातुसाकाङ्क्षत्वग्रहस्य शाब्दबोधहेतुत्वाऽसम्भवात् । न हि तत्तद्धातुसाकाङ्क्षत्वेन लस्तिबादिस्थानिता, येन तद्रूपावच्छिन्नमेव तिबादि स्मारयेत् । अपि तु लत्वेनैव तथात्वमिति । एवं तत्तद्धातुपदान्वयहितोच्चारत्वरूपतत्साकाङ्क्षत्वेन येन पुंसा न लकारः श्रुतस्तस्य तेन रूपेण तत्स्मरणाऽसम्भव इति ।

अत्रेदं चिन्त्यते — लकारतिबाद्योरनतिप्रसक्तस्थान्यादेशभावस्य दुर्वचत्वात् तिबादिस्मारितलकारस्य वाचकत्वं न विचारसहम् । तिबादेरेव यत्र वाचकताभ्रमस्तदनुरोधेन 'पचति' इत्याद्यानुपूर्वीज्ञानस्य तिबादिजन्योपस्थितिसहकारेण शाब्दबोधोपधायकताकल्पनस्यावश्यकत्वात् । लकारजन्योपस्थितिसहकृततादृशानुपूर्वीज्ञानतिबादिधर्मिकलादेशत्वज्ञानघटितसामग्र्यन्तरकल्पने गौरवेण लाघवात् तिबादेरेव ताद्रूप्येण शक्तिकल्पनाया उचितत्वं चेति दिक् ।

आख्यातसामान्यस्य कर्तृत्व इव तद्विशेषस्यात्मनेपदस्य कर्मत्वे शक्तिः, न यथाश्रुतग्राहिवैयाकरणमत इव कर्मरूपधर्मिवाचकत्वं गौरवात्, प्रथमान्तपदार्थे कर्मत्वान्वयबलादेव कर्मताविशिष्टधर्मिलाभसम्भवात् ।

न चात्मनेपदस्य शानच्प्रत्ययस्य धर्मिणि शक्तेः 'पच्यमानमानय' इत्यादौ पच्यमानादिनिष्ठानयनकर्मत्वाद्यनुरोधेनावश्यकत्वात् तत एवोपपत्तौ धात्वर्थान्वयित्वात्मनेपदस्य धर्मवाचकत्वं निर्युक्तिकमिति वाच्यम्, तद्‌शानच्साधारणस्यात्मनेपदत्वस्य शक्ततावच्छेदकत्व एव तथोक्तिसम्भवात् । ताद शात्मनेपदस्य चाऽनुगतनिर्वचनासम्भवात्, पाणिन्यादिसङ्केतसम्बन्धेनात्मनेपद वत्त्वस्य शक्ततावच्छेदकताया उक्तरीत्याऽसम्भवात् । अतस्तादृशोत्मनेपद रूपेण शक्तिकल्पनस्यावश्यकतया लाघवात् कर्मत्व एव तत्कल्पनात् ।

कर्मत्वं च 'त्यज्यते ग्रामः' गम्यते ग्रामः इत्यादौ धात्वर्थतावच्छेदकीभूत संयोगविभागादिरेव विशेष्यतया तद्वाच्यः । 'चैत्रेण गम्यते ग्रामः' इत्यत्र तृतीयार्थस्य कर्तृत्वरूपमाधेयत्वं, तस्य धात्वर्थे संयोगात्मकफलाव च्छिन्ने स्पन्दलक्षणे व्यापारे तस्य च जन्यतासम्बन्धेनात्मनेपदार्थसंयोगरूप फले तस्य चाश्रयतासम्बन्धेन प्रथमान्तपदोपस्थाप्यग्रामेऽन्वय इति चैत्रवृ त्तिर्यः संयोगावच्छिन्नस्पन्दस्तज्जन्यसंयोगवान् ग्राम इत्याकारकः शाब्द बोधः । 'चैत्रेण त्यज्यते ग्रामः' इत्यत्र संयोगस्थाने विभागमन्तर्भाव्य बोध उपपादनीयः ।

अथ चैत्रनिष्ठक्रियाजन्यसंयोगविभागादेर्ग्रामादाविव चैत्रादावपि सत्त्वात् 'चैत्रेण त्यज्यते– गम्यते चैत्रः' इत्यपि स्यात् । न स्याच्च 'चैत्रेण न गम्यते न त्यज्यते चैत्रः' इत्यादीति चेत् ?, अत्र दीधिति कारप्रभृतयः — फलमिव तत्र क्रियान्वयि परसमवेतत्वमपि कर्माख्यातार्थः, परत्वं च भेदरूपं प्रतियोगितया फले आश्रयतयान्वयिनि प्रथमान्तपदोप स्थाप्यस्यान्वयः — चैत्रे चैत्रान्यसमवेतक्रियाजन्यसंयोगादिमत्त्वस्याऽन्वया ऽयोग्यत्वात्, तादृशसंयोगाद्यभावस्य च तत्रान्वययोग्यत्वाच्च तत्रापत्त्यन् पपत्त्योरवकाश इत्याहुः ।

तत्रेदं चिन्तयन्ति— प्रथमान्तपदोपस्थाप्यकर्मणोऽन्वयितावच्छेदकावच्छिन्नत्वाऽविशेषितप्रतियोगितया भेदांशेऽन्वयोपगमेऽपि चैत्रेऽपि चैत्रस्य द्वित्वादिना भेदसम्भवेन तत्समवेतक्रियाया परसमवेतत्वाक्षतेरुक्तदोषोद्धारासम्भव। अन्वयितावच्छेदकावच्छिन्नप्रतियोगितया तत्र तद्भानस्वीकारे 'चैत्रेण द्रव्यं गम्यते' इत्यादावनुपपत्ति— द्रव्यत्वावच्छिन्नभिन्नत्वस्य तत्पदे क्रियादौ बाधात्।

न च तत्र द्रव्यपदं लक्षणया चैत्रान्यद्रव्यपरमिति वाच्यम्, 'मल्लेन गम्यते मल्लः' इत्यादौ मल्लपदस्य मल्लान्यमल्लपरत्वासंभवात्, मल्लान्यसमवेतमल्लवृत्तिक्रियाया अप्रसिद्ध्याऽनुपपत्तितादवस्थ्यात्, अननुगतमल्लगतद्रव्यक्तिघोपस्थित्यनैयत्यात्, कर्मव्यक्तिभिन्नमल्लत्वेन लक्षणाग्रहस्य तादृशवाक्यजन्यधीपूर्वं नियमतोऽसम्भवात्। न च फलविशेष्यव्यक्तिना तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितासम्बन्धेन परत्वेऽन्वयात् सम्बन्धोपस्थितेश्चानपेक्षणाच्चाऽनुपपत्तिरिति वाच्यम्, तत्तात्पर्यज्ञानानुरोधेन तदुपस्थितेरपि शाब्दबुद्धावपेक्षणीयत्वात्। 'तद्व्यक्त्या तद्व्यक्तिर्न गम्यते' इत्यादावभावप्रतियोगिकोटिप्रविष्टतद्व्यक्तित्वावच्छिन्नभिन्नसमवेतक्रियाया अप्रसिद्धेः।

ये तु फलं भेदश्च कर्मप्रत्ययार्थः, फले सामानाधिकरण्यतासम्बन्धेन भेदे च स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन क्रियाया अन्वयः, भेदफलयोश्च कर्मण्याश्रयतासम्बन्धेनान्वयः, चैत्रसमवेतक्रियावच्छिन्नभेदस्य चैत्रो नाश्रय इति तादृशक्रियाजन्यफलाश्रयत्वेऽपि तस्य 'चैत्रेण चैत्रो गम्यते' इति न प्रयोग। 'मल्लो मल्लेन गम्यते' इत्यादेरेकमल्लादिनिष्ठक्रियावच्छिन्नभेदसहितस्य तज्जन्यफलस्य मल्लान्तरे सत्त्वान्नानुपपत्तिरिति ब्रुवते, तन्मतेऽपि 'चैत्रेण चैत्रो न गम्यते' इत्यादेरनुपपत्तिर्दुर्वारैव—चैत्रे चैत्रसमवेतक्रियावच्छिन्नभेदाभावसत्त्वेऽपि तादृशक्रियाजन्यफलाभावस्य बाधात्

न च फलाभावो नञा न तत्र प्रत्याय्यः। अपि तु भेदाभाव एव कर्मणीति वाच्यम्, यदा चैत्रेण ग्रामो न गम्यते तदापि तादृशप्रयोगानुपपत्तेः— तादृशभेदाभावस्य ग्रामे बाधात्। न च भेदस्य सामानाधिकरण्यसंबन्धेन फलेऽन्वयस्तादृशसंबन्धेन क्रियावच्छिन्नभेदविशिष्टस्य क्रियाजन्यफलस्यैव चाभावो नञा कर्मणि प्रत्याय्यते इति न दोषः— विशिष्टाभावस्योभयत्र सत्त्वादिति वाच्यम्, एवमपि मल्लेन यत्रापरमल्लो न गम्यते अपि तु ग्रामादिरेव तत्र ग्रामाद्यगन्तरि, मल्ले मल्लान्तरनिष्ठक्रियावच्छिन्नभेदसहितस्य स्वात्मकमल्लनिष्ठक्रियाजन्यग्रामादिसंयोगस्य सत्त्वेन विशिष्टाभावबाधात् 'मल्लेन मल्लो न गम्यते' इत्यादेरनुपपत्तिः।

यदि च फलमेव कर्माख्यातार्थस्तस्याऽऽश्रयत्वानुकूलक्रियावच्छिन्नभेदवत्त्वोभयसंबन्धेन कर्मण्यन्वयः, नञ्समभिव्याहारे च तदुभयसंबन्धावच्छिन्नक्रियाजन्यफलाभाव एव तत्रान्वेतीत्युच्यते।, तदापि यत्र चैत्रमैत्रयोरुभयकर्मजसंयोगस्तत्र चैत्रनिष्ठतादृशसंयोगस्य चैत्रे आश्रयत्वस्यानुकूलक्रियावच्छिन्नभेदवत्त्वोभयसंबन्धेन सत्त्वात् 'चैत्रेण चैत्रो न गम्यते' इत्यस्यानुपपत्तिः 'चैत्रेण चैत्रो गम्यते' इत्यापत्तिश्च।

अत्रोच्यते— भेदः फलं च कर्माख्यातार्थः, स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन चैत्रादिनिष्ठक्रियाविशेषितभेदस्य स्वसामानाधिकरण्यस्वप्रतियोगितावच्छेदकजन्यत्वोभयसंबन्धेन फलेऽन्वयः, विशिष्टफलस्य नञसमभिव्याहारे विशिष्टफलाभावस्य नञ्समभिव्याहारे च कर्मण्यन्वयः। चैत्रमैत्रयोरुभयकर्मजसंयोगस्थले चैत्रवृत्तिक्रियावच्छिन्नभेदस्य चैत्रेऽसत्त्वेन विशिष्टफलाभावोऽक्षतः। यत्र मल्लेन ग्रामो गम्यते न तु मल्लान्तरं तत्र मल्लनिष्ठग्रामसंयोगे मल्लान्तरनिष्ठक्रियावच्छिन्नभेदसामानाधिकरण्यस्य तन्मल्ला

न्तर्भावेन सत्त्वेपि तादृशभेदप्रतियोगितावच्छेदकमल्लान्तरनिष्ठक्रियाजन्यत्व स्याऽसत्त्वात् तद्घटितोभयसबन्धेन मल्लनिष्ठक्रियावच्छिन्नभेदविशिष्टस्य फल स्याभावो मल्लेऽक्षत एवेति न कश्चिद्दोष

कर्तृप्रत्ययस्थले चाधेयतया प्रकृत्यर्थान्वितस्य फलस्य भेदरूपा ऽपरार्थे सामानाधिकरण्यस्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वोभयसबन्धेना न्वय, तादृशभेदस्य च स्वप्रतियोगितावच्छेदकत्वसबन्धेन क्रियायाम्। यत्र चैत्रक्रियया ग्रामे न सयोग अपि त्वन्यत्र तत्र 'ग्राम गच्छति चैत्र' इतिप्रयोगवारणाय स्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वस्य, 'चैत्रो ग्राम गच्छति' इत्यादौ 'चैत्रश्चैत्र गच्छति' इतिप्रयोगवार णाय सामानाधिकरण्यस्य सन्बन्धे निवेश। चरमस्थले चैत्रग्रामस योगस्य तादृशभेदे सामानाधिकरण्यविरहाच्चैत्रक्रियाया तद्भेदप्रतियोगिता वच्छेदकत्वसत्त्वेपि नातिप्रसङ्ग।

'चैत्रश्चैत्र न गच्छति' इत्यादौ च तादृशभेदान्वितक्रियाकर्तृ त्वाभाव एव चैत्रे प्रतीयते न तु क्रियाया द्वितीयार्थविशिष्टभेदस्य प्रति योगितावच्छेदकत्वसबन्धावच्छिन्नाभाव — तादृशसब धस्य वृत्त्यनियामक त्वात्। यदि तात्पर्यविशेषवशात् क्रियानुयोगिकोऽप्यभाव कचित् प्रती यते इत्यनुभवसिद्धम्, तदा प्रतियोगितावच्छेदकत्वेपि द्वितीयार्थस्तदुप गम्य विशिष्टभेदप्रतियोगितावच्छेदकत्वाभावान्वय एव तदोपगन्तव्य इति दिक्।

फलावच्छिन्नव्यापारबोधकधातूना फले व्यापारे च शक्तिद्वयम्। कर्त्राख्यातस्थले फल धात्वर्थव्यापारविशेषणतया भासते, तत्र द्वितीयार्था धेयत्वान्वय। कर्माख्यातस्थले फल धात्वर्थव्यापारस्य विशेष्यतया भासते। तत्र विशेष्यतयाऽऽख्यातार्थ आश्रयत्वम् [भासते], तद्वि शेष्यतया धर्म (भासते) इति दीधितिकृत।

केचित्तु- संयोगादिरूपफलावच्छिन्नव्यापारबोधकानां गमिप्रभृतीनां कर्मप्रत्ययापेक्षया बहूनां फले शक्तिकल्पनामपेक्ष्य कर्मप्रत्ययानां फले शक्तिकल्पनमेव लघीयः, धातूनां च व्यापारमात्रवाचिता । धातोः फलबोधकत्वमते नामार्थधात्वर्थयोराधाराधेयभावसंबन्धेन साक्षादन्वयासंभवात्, फलाश्रयत्वस्य कर्मणि प्रकारतया भानस्यावश्यकतया तत्संसर्गस्याधिकस्य भानकल्पनेनापि गौरवम्, फलस्य प्रत्ययार्थत्वे च तदाश्रयत्वं संबन्ध एवेति लाघवम् । न च धातूनां व्यापारमात्रवाचित्वे 'ग्रामं त्यजति' इत्यादितोऽपि 'ग्रामं गच्छति' इत्यादित इव संयोगादिरूपफलावच्छिन्नस्पन्दबोधापत्तिः 'ग्रामस्त्यज्यते' इत्यादितोऽपि 'ग्रामो गम्यते' इत्यत इव स्पन्दजन्यसंयोगादिमत्त्वेन मानप्रसङ्ग इति वाच्यम्, कर्मप्रत्ययस्य संयोगविभागादिरूपनानाफलवाचित्वेऽपि तत्तत्फलबोधे धातुविशेषसमभिव्याहारज्ञानस्यापेक्षया ऽतिप्रसङ्गविरहात् । 'त्यजति' 'गच्छति' 'स्पन्दते'— 'त्यागः' 'गमनम्' 'स्पन्दः' इत्यादौ कर्मासमभिव्याहृते बोधवैलक्षण्यं च तत्तद्धातूनां फलविशेषावच्छिन्नव्यापारलक्षणोपगमेनोपपादनीयम् । कर्मान्वितस्वार्थव्यापारबोधकत्वं सकर्मकत्वं गम्यादेः स्वभावाधीनम्, तदभावात् स्पन्दिप्रभृतिष्वकर्मकत्वव्यवहार इत्याहुः ।

तत्र — यागमिप्रभृतीनामिव त्यजिगमिप्रभृतीनामपि पर्यायतेति भगदशायां 'याति' 'गच्छति' इत्यादाविव 'त्यजति' 'गच्छति' इत्यादितोऽप्यविलक्षणबोधापत्त्या धातुविशेषसमभिव्याहारस्य फलविशेषबोधनियामकताकल्पनासंभवात् । न च, 'ग्रामं त्यजति' इत्यादितः संयोगावच्छिन्नव्यापारबोधे तात्पर्यसत्त्वे इष्टत एव— त्वन्मतेऽपि तात्पर्यानुरोधेन लक्षणया तद्बोधे सत्वेनावश्यकत्वात्, परं तु तत्र विभागादिरूपफल एव फलप्रत्ययार्थस्यान्वयिता संयोगादिरूपफलप्रत्ययानेच्छया स्पृ

सतो न तादृशप्रयोग इति वाच्यम्, विना शक्तिभ्रमं लक्षणाग्रहं च ' ग्रामं त्यजति ' इत्यादित सत्यपि तात्पर्ये संयोगावच्छिन्नव्यापाराऽप्रतीतेरानुभविकतया धातो. फलविशेषावच्छिन्नताया आवश्यकत्वात् ।

' ज्ञायते इष्यते क्रियते घट ' इत्यादौ विषयत्वरूपं कर्मत्वं सुबर्थ. । न च कृतिविषयताया. फलतत्साधनतदुपादानसाधारणतया यत्र ' घट. क्रियते ' इत्यादि प्रयुज्यते तत्र ' जलाहरणं क्रियते ' ' कपाल क्रियते ' इत्यादिप्रयोगस्यापत्तिरिति वाच्यम्, कृत्यर्थकधातुसमभिव्याहृत कर्मप्रत्ययस्य चिकीर्षाप्रयोज्यसाध्यताख्यविलक्षणविषयत्वमेवार्थः, उक्तस्थले च कपालादौ कृतेस्तादृशविषयत्वाभावान्नोक्तप्रयोगप्रसङ्ग. । ' काशाः कटाः क्रियन्ते ' इत्यादौ साध्यताख्यविषयताश्रयकर्मान्तरसमभिव्याहृतकर्मप्रत्ययेन व्यापार्यतारूपविषयताऽपि प्रत्याय्यते, अत उपादानतया कृतिविषयकाशादौ साध्यतारूपकृतिविषयताविरहात् न तादृशप्रयोगानुपपत्ति । तादृशकर्मसमभिव्याहाररूपतात्पर्यग्राहकविरहात् ' काशा क्रियन्ते ' इत्यादौ काशादौ व्यापार्यताबोधानुपपत्तेर्न तादृशप्रयोग इति ।

" ' काशा. कटा. क्रियन्ते ' इत्यादावपि विशेष्यभेदेन वाक्यार्थभेदात् कर्मद्वयवाचकपदयो समभिव्याहारे व्यापार्यताबोधानुपपत्ति, एवम्— ' क्रियते ' इत्यत्र विषयतायाः कर्मप्रत्ययार्थत्वे पाकानुकूलकृतिमादाय ' पाकोऽकारि ' इत्यादिप्रयोगापत्तिरित्येके तु दूषणं निराकृतमप्रस्तात् ।

कर्तृकर्मवत् कालविशेषेऽनुशिष्टा लडादय· कालविशेषमपि बोधयन्ति । तत्र लट्प्रत्ययस्य वर्तमानकाले शक्तिः, ' पचति ' इत्यादौ फूत्कारादिरूपव्यापारबोधकप्रत्ययोपस्थाप्यकालस्तादृशव्यापार एवान्वेति न तु क्रियायाम्—यदा पुरुषो यत्नशून्यस्तदधीनाग्निसंयोगादिरूप पच्यादेरर्थो विद्यते तदा ' अद्य न पचति ' इतिप्रयोगात्, ' अद्य पचति ' इत्युक्ते

' इदानीमयं पाकयत्नवान्न वा ' इतिसंशयनिवृत्तेः , पूर्वापरीभावापन्नस्या
ध्यारोपणादिव्यापाराणां विशिष्य पच्याद्यर्थघटकत्वेन प्रत्येकतद्व्यापारेषु का
लान्वयबोधापेक्षया कृत्यादिरूपैकार्थे तदन्वयस्यैव लाघवेनोचितत्वाच्च ।

वर्तमानकालश्च तत्तच्छब्दप्रयोगाधिकरणकालरूपस्तत्तच्छब्दार्थः,
अतो नैकदालप्रयुक्तलडादितोऽपरलडादिप्रयोगाधिकरणकालीनत्वस्य कृत्या
द्यन्वयः । स्वप्रयोगाधिकरणकालत्वेन स्ववाच्यत्वे स्वस्यानुगमाच्छ-
क्त्यानन्त्यं सामान्यतोऽव्युत्पत्तेर्दुर्घटतयाऽपूर्वव्यक्तियोधानुपपत्तिः सर्वनामवि
चारदर्शितरीत्या समाधास्यते — विशिष्य तत्तत्कालत्वावच्छिन्नबोधस्यानुभ
वसिद्धतया सर्वनामशक्तौ बुद्धिस्थत्ववच्छब्दप्रयोगाधिकरणत्वमुपलक्षणावि
धया स्यादर्तक वाच्यम् । न च तत्तत्कालस्यैवमप्यवाच्यत्वे तद्भानानुपप
त्तिरसमाधेयैवेति वाच्यम् , शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेन
तत्तत्कालत्वानामेवोपलक्षणीयत्वात् ।

अथ शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मा वर्षत्वादिकमपि ।
कालद्वयावृत्तिधर्मत्वनिवेशेऽप्येतद्रूपमासत्वादिव्यावर्तनमशक्यम्, क्षणद्वया-
वृत्तिक्षणवृत्तिधर्मत्वेन तद्व्यावर्तने चाऽध्ययनाद्यनधिकरणेऽप्यध्ययनाद्यधि
करणस्थूलकालान्तर्गतक्षणेऽसमाप्तारब्धाध्ययने पुंसि ' चिन्तामणिमय-
मधीते ' इत्यादिप्रयोगानुपपत्तिः ।

यदि च — स्वप्रागभावानधिकरणस्वाश्रयकर्तृकत्वप्रकृतक्रियानाशप्रागभा
वाधिकरणशब्दप्रयोगाधिकरणकाल एव वर्तमानकाल आधेयतासंबन्धेन
कृत्यन्वयेति, अतो नोक्तस्थले ' चिन्तामणिमयमधीते ' इत्यादिप्रयोगा
नुपपत्तिः, आरम्भावधि समाप्तिपर्यन्तस्य स्थूलकालस्यापि तथात्वेन शब्द
प्रयोगाधिकरणक्षणादिरूपान्तरालकालेऽध्ययनाद्यनुकूलकृतिविच्छेदेऽपि शब्दप्र
योगाधिकरणत्वोपलक्षितताद‍ृशस्थूलकालवृत्तित्वस्यापि ताद‍ृशक्रियानुकूलकृ-

तात्पर्येण योग्यतानिर्वाह इत्युच्यते ' तदा च सम्यक्चिन्तामणि-
पाठस्य किञ्चित्कालोत्तरं पुनश्चिन्तामणिमध्येष्यते सत्यन्तरालदशायामपि
' अयं चिन्तामणिमधीते ' इति प्रयोगापत्तिः । यदि स्तुतिपाठादि-
विच्छेददशायामपि ' प्रत्यहमयं स्तुतिं पठति ' इत्यादिवदुक्तस्थलेऽपि
दर्शितप्रयोग इष्ट एवेत्युच्यते ' तदापि स्वपक्षेण विशिष्य वचनकर्त्री-
नामुपादानेनाऽन्तःक्रमो दुरुद्धर एव इति चेन् ' ,

न — शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेनोपलक्षणेनाऽनु-
गतीकृततत्तत्क्षणादिनानाधर्मावच्छिन्न एव काले लटः शक्तिः । कि-
यारम्भात् पूर्वं कर्मसमाप्त्युत्तरं च ' अधीते ' ' पचति ' इत्यादिप्रयो-
गवारणाय कृत्यविरहव्यावर्तकतादृशकालस्य स्ववृत्तिप्रागभावाप्रतियोगित्वस्य
वृत्तिध्वंसाप्रतियोगिकृतक्रियाकर्तृनिष्ठत्वाभ्यां विशेषितेनार्थेनाऽऽसत्त्येनाऽन्वय-
नियम उपगन्तव्य , तत्तत्क्रियारम्भपूर्वमपि तत्समाप्त्युत्तरमपि वा वर्तमा-
नस्य तत्क्रियानुकूलकृत्यधिकरणकालस्य दर्शितविशिष्टार्थेनान्वयान्तरात्
कृतौ नाधीतेऽधिगच्छतीति न शब्दप्रयोगाधिकरणतादृशकालमादाय दर्शित-
प्रयोगापत्तिः । तत्तच्छास्त्रार्थस्य विशिष्य निर्देशानुपपत्तिश्चेतरथा ।

न च क्रियानुकूलकृतिशून्यान्तरालदशायां स्थूलकालमादाय ' पचति '
' अधीते ' इत्यादिवत् तादृशकृत्यधिकरणक्षणेऽपि स्थूलकालावच्छिन्नाभाव-
समादाय ' न पचति ' ' नाधीते ' इत्यादिप्रयोग — तत्र, नञो वर्त-
मानक्षणमात्रावच्छिन्नतादृशक्रियानुकूलकृत्यभावबोधकत्वनियमात्, उक्तरीत्या
विशिष्य शब्दप्रयोगाधिकरणक्षणादिरूपकालस्यापि लट्प्रत्ययेन बोधनस्य
स्वीकारात् ।

नन्वध्ययनादिशब्दारम्भेऽपि प्रतियोगिन्येव कालान्वय इति तु न मतम्;
तत्तत्क्षणवृत्तिताकविक्रियारम्भत्वान्तर्भावेणाऽऽवच्छेदेन तदानीन्तनस्थूलकाला-
वच्छेदेन तादृशकृतिनिरूपितस्य प्रत्येकं चानियतत्वस्य दुर्वारत्वात् ।

न च कालानवच्छिन्नाधारतासम्बन्धेन नञर्थस्य पुरेऽन्वयाद्योक्ता तिप्रसङ्ग इति वाच्यम्, तादृशस्थूलकाले यत्रात्मनि पाकादिकृतिस्तादृश काले तद्गततादृशकृत्यनधिकरणक्षणे 'न पचति' इत्यादिप्रयोगोपपत्तये तत्तत्क्षणावच्छिन्नपाकादिकृत्यभावस्यैव तत्र तत्र स्वीकरणीयतया कचित् प्रतियोगिप्रसिद्धेर्दुर्वारत्वात् ।

व्यापारावच्छेदकेन च लडादिप्रत्ययेन क्रियायामेव वर्तमानत्वमन्वयो बोध्यते 'जानाति' इत्यादौ न तु लडर्थाश्रयत्वादौ— ज्ञानाश्रयत्वेऽपि तदाश्रयत्वादिसम्भवात् 'जानाति' इत्यादिप्रयोगापत्तेः । ज्ञानादि विशिष्टे आश्रयत्वादौ कालान्वयमुपगम्यातिप्रसङ्गवारणे विशेषणे ज्ञाना दावपि तदन्वयस्यावश्यकत्वे तस्यैव स्वीकारौचित्यात् ।

'नश्यति' इत्यादौ क्रियायां कालान्वयस्वीकारे विनष्टादावपि 'नश्यति' इत्यादिप्रयोगः स्यादिति तद्योगेऽपि लडादौ वृत्युपगम्य तत्रैव कालान्वय इत्यपि दुरुपगमम् । वस्तुतस्तु— नाशत्वमुत्पत्तिमद भावत्वम्, तथा च धातुप्रतिपाद्यतावच्छेदके उत्पत्तावेव कालान्वय इत्येव सा मीप्ये वर्तमानकालयोगोत्पत्तिपरत्वेन धात्वर्थेऽन्वय इत्यपि वदन्ति ।

लृट्प्रत्ययेन 'पक्ष्यति' इत्यादौ प्रत्ययार्थकृतौ, 'ज्ञास्यति' इत्यादौ क्रियायां भविष्यत्वं प्रत्याय्यते । यद्यपि प्रागुत्पत्त्यर्थकतयाऽना गतकालोत्पत्तिकत्वं भविष्यच्छब्दार्थः तथापि 'पक्ष्यति' इत्यादौ प्रत्यया र्थकृत्यादावनागतत्वमात्रस्य प्रतिनिरूप्यते— उत्पत्तिप्रतीतेर्निष्फलत्वात् । 'भविष्यति' 'उत्पत्स्यते' इत्यादौ च धातुनैव तादृशोत्पत्तिः प्रत्याय्यते । 'नङ्क्ष्यति' इत्यादौ च दर्शिता गतिः । तथा च वर्तमान प्रागभावप्रतियोगित्वं प्रतियोगितासम्बन्धेनाऽन्वयी वर्तमानप्रागभावो वा लृट्प्रत्ययार्थः । प्रागभावानङ्गीकारे वर्तमानकालध्वंस एव तदर्थः, ध्वंस

त्वं कालोपाधित्वेन स्वसमानकालपदार्थाधारतयाऽऽधेयतासंबन्धेन । अनागतकृतेर्वर्तमानकालध्वंसोत्पत्तिमत्तया उत्पत्तिसंबन्धेन वा कृत्या-दावन्वयः ।

अथ पचमानेऽप्युदीच्यपाकानुकूलकृतिमादाय 'पक्ष्यति' इत्यादिप्रयोगापत्तिः, पाकानुकूलकृतित्वावच्छेदेन चाऽनागतत्वबोधस्वीकारो न सम्भवति— पूर्वपूर्वपाकानुकूलकृतौ तद्बाधात्, पक्ष्यमाणेऽपि 'पक्ष्यति' इतिप्रयोगानुपपत्तेः । तत्तत्पाकानुकूलकृतित्वावच्छेदेनापि तदन्वयाऽसंभवः- तत्तत्पाकत्वेन पदादनुपस्थितेः । नापि यत्किञ्चित्पाकानुकूलाऽऽख्यातत्वावच्छेदेन तदन्वयः— आख्यातोपस्थापकपदाभावात् । तत्तद्व्यक्तिमनन्तभाव्य दुर्वचत्वाच्चेति चेत् ? न— प्रागभावस्य वर्तमानत्वं शब्दप्रयोगाधिकरणक्षणवृत्तित्वम्, वर्तमानप्रागभावस्य प्रत्ययार्थेन तस्य स्वविशिष्टकालवृत्तिकृतिजन्यपाकाननुकूलत्वविशिष्टप्रतियोगितासंबन्धेन वर्तमानकालवत्स्यतदर्थत्वे च स्वपूर्वकालीनकृतिजन्यपाकाननुकूलत्वविशिष्टाधेयत्वसंबन्धेन कृत्यंशेऽन्वयोपगमे उदीच्यकृतौ वर्तमानप्रागभावादेर्दर्शितविशिष्टसंबन्धाऽसत्त्वेनाऽतिप्रसङ्गविरहात् । ध्वंसपूर्वत्वं च तदनधिकरणत्वमेव ।

न चाऽऽन्तरालिककृतिजन्यस्य पच्यर्थव्यापारस्य पूर्वव्यापारानुकूलकृत्यजन्यतयाऽऽन्तरालिककृतेः पूर्वकृतिजन्यपाकानुकूलत्वमक्षतमेवेति तस्यामपि निरुक्तविशिष्टसंबन्धेन वर्तमानप्रागभावादिमत्त्वमक्षतमेवेति वाच्यम्, कृतिजन्यपाकेत्यत्र कृतिजन्यव्यापाराधीनफलानुकूलव्यापारस्य विवक्षितत्वात् ।

'पक्ता' इत्यादौ लुटोऽनद्यतनभविष्यत्त्वमर्थः । अनद्यतनभविष्यत्त्वं च शब्दप्रयोगाधिकरणदिवसाऽवृत्तित्वे सति शब्दप्रयोगकालीनप्रागभावप्रतियोगित्वम् । शब्दप्रयोगाधिकरणदिवसध्वंसोत्पत्तिकत्वं वा ।

केचित्— भविष्यत्त्वमेव तस्यार्थ, क्रियाया कृतेर्वा स्वरूप सदनद्यतनत्वमेव तत्साधुतानियामकम्। असाधुत्वादेव 'अद्य पक्ष्यति' इत्यादौ 'पक्ता' इति न प्रयोग इत्याहु। तन्न— तथा सति, भविष्यत्त्वादिकमपि नाख्यातार्थं स्यात्, स्वरूपसद्भविष्यत्त्वादिकमेव लृडादिप्रत्ययस्य साधुतानियामकम्, असाधुत्वादेव 'पक्ष्यति' इत्यादौ 'पक्ता' इतिवत् 'पचति' इत्यादौ 'पक्ष्यति' इति प्रयोगविरह इत्यस्यापि वक्तु शक्यत्वात्।

'पचति' 'पक्ष्यति' इत्यादेरविलक्षणबोधजनकत्वमनुभवविरुद्धमिति कालविशेषबोध आवश्यक इतिचेत्, तदा 'पक्ता' 'पक्ष्यति' इत्यादेरपि विलक्षणबोधजनकत्वस्याऽऽनुभविकतया अनद्यतनत्वान्वयबोधोपि दुर्वार। यदि च 'पक्ष्यति' इत्यादिवाक्यजन्यबोध सति भविष्यत्त्वादिसशयानुदयाद्भविष्यत्त्वादे शाब्दधीविषयत्वमावश्यकमित्युच्यते तदाऽनद्यतनबोधेपीदृशीमेव युक्ति गृहाण।

एवम् 'न पक्ष्यति' इत्यादावभावेऽनागतकालावच्छिन्नत्वभानमावश्यकम्, अन्यथा पक्ष्यत्यपि वर्तमानप्रतिपाककृत्यभावमादाय 'न पक्ष्यति' इत्यादिप्रयोगप्रसङ्गात्। न च पक्ष्यत्यप्यनागतयत्किञ्चित्कालावच्छेदेन वर्तमानमभावमादाय 'न पक्ष्यति' इति प्रयोगो दुर्वार एवेति वाच्यम्, अनागतकालावच्छिन्नत्व हि तत्र वर्तमानक्षणध्वसावच्छिन्नत्वम्, तादृशध्वसनिष्ठावच्छेदकता चाऽनवच्छिन्ना ग्राह्या, अनागतकृतिमति च पुसि तदभाववृत्तौ वर्तमानक्षणध्वसरूप काल प्रतियोगिवृत्तावप्यवच्छेदक इति विरोधभञ्जनाय तादृशकृत्यनवच्छेदकाऽवान्तरकाल एवावच्छेदक उपेय इति नोक्तातिप्रसङ्ग इति।

इत्यदर्शितवाक्यस्य प्रामाण्योपपादनाऽसंभवात् । अगत्या तु यत्कर्मको यत्कर्तृकः पाकोऽप्रसिद्धस्तादृशकर्मकर्तृघटितार्थकत्वम्पदद्वयस्याऽयोग्यबोधगम्यते ।

केचित्तु तत्रापि पाके तत्कर्मकत्वाभावस्य तादृशे च कर्तरि पाककृत्यभावस्य बोधमुपगम्य प्रामाण्यमुपपादयन्ति— तात्पर्यसत्त्वे एकेनापि नञाऽभावद्वयबोधनसम्भवात् । न चैवं तण्डुलमात्रं पचति पश्यति वा चैत्रेऽपि ' तण्डुलमयं न पचति न पश्यति ' इति प्रयोगः स्यात्— तत्तण्डुलाऽकर्मकपाकानुकूलवर्तमानादिकृत्यभावाऽबाधादिति वाच्यम्, यतः सुबर्थप्रतियोगिकस्वार्थाभावान्वितक्रियाकर्तृत्वाभावबोधकत्वं नञः ' आकाशं न पचति घटः ' इत्यादावपि न स्वीक्रियते— तादृशबोधजनकताया अनभ्युपगमात्, येनोक्तातिप्रसङ्गः स्यात्, किं तु ' पाक आकाशाकर्मकः पाककृत्यभाववान् घटः ' इत्यादिसमूहालम्बनबोध एव, उक्तस्थले च चैत्रे पाककर्तृत्वाभावबाधान्न प्रामाण्यप्रसङ्गः । अस्तु वा तत्राभावान्वितक्रियाकर्तृत्वाभावविषयकोऽसमूहालम्बनरूप एव बोधस्तथापि न दर्शितातिप्रसङ्गः —तादृशबोधेऽन्वयितावच्छेदकावच्छेदेन प्रथमाभावभाननियमात् पाकत्वावच्छेदेन च तण्डुलादिकर्मकत्वाभावान्वये योग्यताविरहात् । ' अन्ध आकाशं न पश्यति ' इत्यादावपीदृशी गतिः ।

अथ यत्तण्डुलादिकर्मको यत्पुरुषकर्तृकः पाकोऽप्रसिद्धस्तत्पुरुषेऽन्यकर्मकपाककर्तृत्वस्य तत्तण्डुलादौ चान्यपुरुषपच्यमानत्वादेर्भानदशायाम् ' तण्डुलमयं न पश्यति ' इत्यादिवाक्यस्य बोधकताया अनुभवसिद्धत्वेनाऽपाकर्तुमशक्यत्वान्नोक्तप्रकारः साधीयान्— विरोधिनिश्चयसत्त्वेन

तत्पुरुषे पाककर्तृत्वसामान्याभावे च पाकत्वावच्छेदेन तण्डुलकर्मकत्वाभावस्य च प्रतीत्यसंभवादिति चेत् ?,

न—तत्र तादृशवाक्यस्यैकाभावावगाहिभ्रमजनकत्वोपगमात् । न च सर्वत्रैव तदुपगमौचित्येन प्रयासवैफल्यमिति वाच्यम्, विशेषदर्शिभिरपि तथाविधवाक्यप्रयोगात् तस्य प्रसिद्धार्थकतासंपादनस्यावश्यकत्वात् । न च तत्तण्डुलादिकर्मकत्वम्—तन्निष्ठविक्लित्तिजनकत्वं तदपि चाऽप्रसिद्धमिति कथं पाके तदभावप्रत्यय इति वाच्यम्, विक्लत्त्यादावेव तत्तद्वृत्तित्वाभावबोधोपगमात् ।

' अपाक्षीत् ' इत्यादौ लुङोऽतीतकालोऽर्थः, तस्याख्यातार्थकृत्यादावन्वयः, तस्य च संबन्ध आधेयत्वम् । अथ वा कालाऽविशेषणतयैवातीतत्वं लुङोऽर्थः, आश्रयतासम्बन्धेन च तस्य कृत्यादावन्वयः कालान्तर्भावस्य व्यर्थत्वात् । अतीतत्वम् वर्तमानध्वंसप्रतियोगित्वम् । वस्तुतो वर्तमानध्वंस एव लुङर्थः, तस्य प्रतियोगितासंबन्धेन कृत्यादावन्वयः । मध्यदशायाम् ' अपाक्षीत् ' इत्यादिप्रयोगवारणमुक्तरीत्या बोध्यम् ।

लङ्प्रत्ययस्याऽतीतत्वदनद्यतनत्वमप्यर्थः—अद्य पचति ' अपचत् ' इत्यप्रयोगात् । " अभून्नृपः " इत्यादावनद्यतनत्वमविवक्षितं तद्विवक्षया न लङ्प्रत्ययेन लुङ्बाधः । अतोऽप्यनद्यतनत्वबोधकत्वं लङ्प्रत्ययस्यावश्यकम्—अन्यथाऽनद्यतनत्वस्य लङ्माधुत्वनियामकत्वेऽनद्यतनस्य वस्तुसतोऽविवक्षामात्रेणाऽप्यके लङ्वारणानुपपत्तेः । इदमप्यनयसनरदम्—प्रकृतशब्दप्रयोगाधिकरणदिनान्यूनवृत्ति । अथ वा स्यानन्वयेनाऽनद्यतनत्वं न लङर्थः, किं तु तादृशदिनावच्छिन्नवृत्तिध्वंसप्रतियोगित्वमनद्यतनातीतत्वं विवक्षितम् ।

अतीतपमनद्यतनत्वं परोक्षत्वं च लिडोर्थः । "अध्यास्त सर्वर्तुसुखामयोध्याम्" इत्यादौ परोक्षत्वसत्त्वेऽपि परोक्षत्वाविवक्षया न लिट् । परोक्षत्वं च वक्तुः साक्षात्काराविषयत्वम् ।

केचित्तु—वक्तृभिन्नकर्तृकत्वमेव परोक्षत्वम्, अत एव लिट उत्तमपुरुषाऽसम्भवेनाऽपरोक्षतायामपि लिटः साधुत्वे "णलुत्तमो वा" इत्यादेर्ज्ञापकत्वमुपायकारोक्तं सम्भच्छते, अन्यथा निद्रादिदशायां स्वकर्तृकगमनादिक्रियायां स्वपरोक्षत्वसम्भवेन ज्ञापकताऽसङ्गतिरित्याहुः ।

'कलिङ्गे दृष्टोऽसि', नाहं कलिङ्गान् जगाम' इत्यादावत्यन्तापह्नवस्थले सूत्रान्तरेण क्रियाया अपरोक्षत्वेऽपि लिड्विधानात् तादृशज्ञापकबलेन "ध्यानेन निरणायत्" इत्यत्र लिटः साधुत्वोपपादनमुपायकृतामयुक्तमेवेति बोध्यम् अत्यन्ताऽपह्नवश्चाऽबाधितपरोक्तविपरीतबोधनाय तदुपपादकाभावप्रतिपादनेच्छा कलिङ्गाधिकरणकदर्शनादेरुपपादकं कलिङ्गगमनादिकं तेन विना तदसम्भवात् । अत्यन्तापह्नवस्वरूपमेव लिट्साधुतानियामकं ।

लिङ्लोटोर्विधिरर्थः — प्रवृत्त्यर्थे तत्प्रयोगात् । विधिः—प्रवर्तकज्ञानविषयो धर्मः, स च धर्मो न्यायनये कृतिसाध्यत्वं बलवदनिष्टाननुबन्धित्व (अजनकत्व) सहितमिष्टसाधनत्वं च । 'ओदनकामः पचेत्' "स्वर्गकामो यजेत" इत्यादावोदनस्वर्गादिरूपं यत्फलं तत्साधनत्वं पाकयागादिक्रियायां प्रतीयते । तादृशफलानां च तत्तद्रूपेण लिङादिशक्यतावच्छेदककोटिप्रवेशे शक्त्यानन्त्यं सर्वसाधारण्येन व्युत्पत्त्यनुदयेनाऽपूर्वफलसाधनत्वबोधानिर्वाहश्चेत्यत्वेन तेषामननुगम । इष्टत्वम्—समभिव्याहृतपदोपस्थापितकामनाविषयत्वम्, अतः 'स्वर्गकामः पचेत' इत्यादौ शक्तिभ्रमशून्यस्य नौदनादिसाधनत्वधीः । न वा तत्तात्पर्येण तथाप्रयोगः प्रामाणिकानाम् ।

इष्टत्वज्ञानस्याऽप्रवर्तकत्वेपि शक्यफलानुगमार्थं तस्य शक्यता। यस्तुतस्त्वशक्यस्यैव तस्य शक्यानुगमकता सर्वनामस्थले बुद्धिस्थत्व-मत्। तेन रूपेण फलाना सङ्केतविषयता विना शक्त्यैक्याऽसभवात्। तस्य सङ्केतविषयत्वोपगमेपि यथा न तस्य वाच्यता तथा प्रपञ्चितम न्यत्र। अत्र चेष्टत्वस्य शाब्दबोधेऽभानाद्विशिष्येष्टतावच्छेदकस्वर्गत्वा दिप्रकारेण शाब्दबोधोत्पत्त्या विधिवाक्यात् प्रवर्तकज्ञाननिर्वाह।

यत्तु इष्टत्वेन फलभानेपि स्वर्गकामादिपदैकदेशोपस्थितस्वर्गत्वा वच्छिन्नस्य विध्यर्थैकदेशे इष्टेऽभेदान्वयात् प्रवर्तकज्ञाननिर्वाह इति, तन्न सत्—वृत्त्यर्थैकदेशे इतरानन्वयनियमात्, स्वर्गत्वादिप्रकारेण कामना धीनप्रवृत्तौ स्वर्गत्वादिविशेषितफलसाधनताज्ञानस्य हेतुतयाऽभेदेन स्वर्गा-दिविशेषितफलसाधनताज्ञानस्यानुपयोगित्वाच्च। 'अभेदेन स्वर्गादिप्रकारक स्वर्गादीष्टसाधनताज्ञानमपि स्वर्गत्वादिप्रकारकप्रवृत्तौ हेतु, अत एव "स्वर्गकामो यजेत" इत्यादितः प्रवृत्ति' इति तु न युक्तम्—स्वर्ग त्वप्रकारककामनाया अधिकारित्वानुपपत्तेः।

अथेष्टत्वस्य शक्योपलक्षणत्वे तदभानाऽभाननिर्वाहेपि स्वर्गत्वादेरश क्यस्य भानं न सम्भवति अशक्यस्य भानोपगमेऽतिप्रसङ्गादिति चेत्, स्वर्गत्वाद्यवच्छिन्ने समभिव्याहृतकामनाविषयत्वज्ञानसहकृतस्य तादृशका मनाविषयतावच्छेदकत्वज्ञानस्य स्वर्गत्वादिप्रकारकशाब्दधीहेतुत्वोपगमे ऽतिप्रसङ्गानवकाशात्। वस्तुतस्तादृशकामनाविषयतावच्छेदकत्वोपलक्षित स्वर्गत्वादिविशिष्टसाधनत्वे शक्तिस्वीकारात् सर्वसामञ्जस्यम्।

न च स्वर्गत्वादिविशिष्टसाधनत्वस्य विधिप्रत्ययवाच्यत्वे न सम पति स्वर्गादेरेककार्यत्वाद्यन्यतमत्वादिविशिष्टसाधनत्वेन यागादिनिष्ठतावच्छेदकतया यागादौ स्वर्गादिविशिष्टसाधनत्वबोध न। न हि अन्यतमत्वस्य धर्मो न त्वतिरिक्ते विशेषणेपि वाच्यम्, स्वर्गत्वादे शक्य

विशेषणत्वेऽपि तदुपलक्षितवैजात्यावच्छिन्ननिरूपितजनकताया यागादाव बाधितया स्वर्गादिजनकतात्वेन विधिप्रत्ययार्थे भानसम्भवात् । घटत्वादि विशिष्टवाचकपदघटितात् ' घटं द्रव्यत्वेनैव जानाति ' इत्यादिवाक्याद् घटत्वाद्युपलक्षितघटादिविशेष्यकज्ञानवत् ।

न च तद्धर्मावच्छिन्ननिरूपितसाधनताज्ञानं विना तद्धर्मप्रकारक फलेच्छाधीनप्रवृत्त्यनिर्वाह इति वाच्यम्, वह्नित्वादिप्रकारकेच्छातोऽपि तृणादिसमवधानेऽप्यान्तप्रवृत्तेरानुभविकत्वात्, सुखदुःखार्थिनामपि श्रमं विना क्रियाविशेषे प्रवृत्तेश्च तद्धर्मावच्छिन्नफलार्थिप्रवृत्तौ तद्धर्मप्रकारेण भासमानफले सति साधनताज्ञानस्यैव प्रवर्तकत्वात् । स च धर्मः कार्य तावच्छेदकतया भासतां कार्यांशे उपलक्षणतयैव वेत्यन्यदेतत् । न हि वह्नित्वादिकं तृणादिजन्यतावच्छेदकम् — व्यभिचारिसाधारणत्वात् । न वा सुखत्वादिकं कस्यचिज्जन्यतावच्छेदकम् — अदृष्टवशभवनत्वात् ।

एवं सति घटत्वावच्छिन्नफलार्थी तन्त्वादौ कथं न प्रवर्तते ? त न्त्वादेरपि घटत्वाद्युपलक्षितजन्यत्वादिविशिष्टनिरूपितद्रव्यत्वावच्छिन्नसाध नतावत्त्वादिति चेत् ? फलानुपधाननिश्चयात्, तस्य स्वातन्त्र्येण प्रवृत्ति प्रतिबन्धकत्वात् । फलोपधायकसाधनत्वस्य वा विधिप्रत्ययार्थतया ' घट कामस्तन्तुमुपाददीत ' इत्यादिर्न प्रयोगः । न च तथापि स्वर्गत्वादेर्यागा दिनिष्ठकारणताघटकव्यापकतानिरूपकतावच्छेदकतया स्वर्गत्वावच्छिन्नानि- रूपितव्यापकताघटितकारणताया बाधः । स्वर्गादिनिष्ठकार्यतावच्छेदक वैजात्यस्य च कारणताग्रहोत्तरकालत्वेन प्रागनुपस्थित्या तदवच्छिन्न निरूपितव्यापकताबोधासम्भव इति ' स्वर्गकामः ' इत्यादौ विध्यर्थबो धानुपपत्तिर्दुर्वारैवेति वाच्यम्, स्वरूपसम्बन्धरूपाया एव कारणताया वि ध्यर्थत्वोपगमात् ।

अन्यथासिद्धनिरूपकताऽनवच्छेदकनियतोत्तरवर्तितावच्छेदकधर्मवत्स्वर्गकत्वमेव वा स्वर्गकारणत्वम्, नियतोत्तरवर्तितावच्छेदकश्च धर्मो विशिष्योत्तरकालकल्प्यो जातिविशेष एव नियतोत्तरवर्तितावच्छेदकत्वेन सामान्यरूपेण शाब्दबुद्धौ भासते, नियतोत्तरवर्तितावच्छेदकत्वं च कारणतावच्छेदकत्वाभिमतधर्मावच्छिन्नतद्व्यापारान्यतराभावाधिकरणताविशिष्टोत्पत्तिक्षणावच्छिन्नाधिकरणतानिरूपकतानवच्छेदकत्वम्। अधिकरणतावैशिष्ट्यञ्च स्वावच्छेदकक्षणाव्यवहितोत्तरक्षणावच्छिन्नस्वाश्रयनिष्ठत्वसम्बन्धेन।

वस्तुतः स्वर्गनिष्ठधर्मावच्छिन्ननिरूपितनियतपूर्ववर्तितावच्छेदकधर्मवत्त्वमेव स्वर्गकारणत्वम्। नियतपूर्ववर्तितावच्छेदकत्वं चाऽव्यवहितपूर्वकालावच्छिन्नवृत्तिकाभावघटितदैशिकव्यापकतायाः स्वाश्रयत्वस्वाश्रयनिष्ठव्यापारवत्त्वाऽन्यतरसम्बन्धेनावच्छेदकत्वमेव। व्यापकत्वनिरूपकतावच्छेदकवैजात्यस्य विशिष्यानुपस्थितावपि स्वर्गधर्मत्वेन ज्ञानं सम्भवत्येव। व्यापकताघटकाभावप्रतियोगितायां स्वरूपतोऽवच्छेदककोटिप्रविष्टाया अपि जातेर्व्यापकताभाने स्वर्गधर्मत्वादिना भाने न बाधकम्— स्वर्गधर्मत्वादेरुपलक्षणतया भानात्। प्रतियोगितासंबन्धेन प्रतियोगिप्रकारकज्ञान एव प्रतियोगिकोटावुपलक्षणप्रकाराऽभाननियमात्, प्रकृते च कारणताशरीरघटकाभावस्य प्रतियोगिताप्रकारेण भाननियमात्। अत एव स्वरूपतो वह्नित्वाद्यवच्छिन्नप्रतियोगिताकाभावस्य वह्नित्वाद्यवच्छिन्नव्यापकतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नाभावत्वेन लक्षणप्रवेशस्य समयदुक्तिकृता।

इत्थमेव चेष्टतावच्छेदकधर्माणामुपलक्षणीभूतेनेष्टतावच्छेदकत्वेन व्यापकताघटकाभावप्रतियोगितावच्छेदककोट्यप्रविष्टेनापीष्टतावच्छेदकधर्माणां, सर्वसाधारणशक्तिग्रहे भानमुपपद्यत इति।

एतेन— नियतोत्तरवर्तितावच्छेदकधर्मवत्स्वर्गकत्वस्य विध्यर्थत्वा मते यागादिधर्मिकतादृशकारणताग्रहस्य प्रवृत्तिहेतुता वाच्या, तदपेक्षया च स्वर्गादिधर्मिकनियतोत्तरवर्तितावच्छेदकधर्मरूपयागादिसाध्यताज्ञानस्य

प्रवृत्तिहेतुत्वे तादृशसाध्यताविशिष्टेष्टमात्रस्य विध्यर्थत्वे प्रवर्तकत्वं च लाघवम्, तादृशसाध्यताया निरुक्तसाधनतान्तर्गतत्वात् इतीष्टसाधनत्वस्यविध्यर्थत्वं प्रवर्तकत्वं चव्याहन्येत। एवं यत्र कारणतावच्छेदकधर्मोऽप्यनुपस्थितः, अतिप्रसक्तेन स्वर्गत्वादिना वा धर्मेण कारणमुपलक्षितं तत्र शब्दात् कारणताग्रहानुपपत्तिश्चेति। निरस्तम्—व्यापकताघटितकारणताया. साध्यतामपेक्ष्याऽगौरवस्या एवोक्तरीत्या प्रवर्तकत्वादिसंभवात्, तादृशसाधनताशरीरे व्यापकतावच्छेदकत्वेनैव कारणतावच्छेदकप्रवेशात् तद्ग्रहे विशिष्य तदुपस्थित्यनुपयोगाच्चेति।

केचित्तु विजातीयस्वर्गनिरूपितसमवाय एव स्वर्गादिनिष्ठयागादिजन्यतावच्छेदकसम्बन्धः, तथा च वैजात्यस्य सम्बन्धघटकतयैव व्यापकताशरीरे निवेशान्नोपस्थित्यपेक्षा न वा कारणताविघटकव्यभिचारावकाश इत्याहु। तदसत्— विजातीयस्वर्गनिरूपितसमवायत्वेन संबन्धताया मानाभावात्। तादृशसंबन्धघटितव्यापकताया विधिप्रत्ययार्थत्वे तस्य स्वर्गादिनिष्ठवैजात्यभेदेन शक्तिबाहुल्यप्रसङ्गात्। तादृशकार्यसंबन्धघटितेष्टकारणतायाश्च प्रमाणान्तरेणाऽप्रत्यायितत्वात् तत्र शक्तिग्रहानुपपत्त्या शाब्दबुद्धौ तद्भानाऽनुपपत्तेश्च।

न चेष्टतावच्छेदकत्वोपलक्षितस्वर्गत्वावच्छिन्ने कारणताघटकाधिकरणादिपदार्थे च खण्डशः शक्तिरुपेया। आकाङ्क्षावशाच्चाधिकरणरूपविध्यर्थे विजातीयस्वर्गनिरूपितसमवायस्य सम्बन्धतया भानात् तादृशकार्यसंबन्धघटितकारणतायाः शाब्दबोधे भानमुपगन्तव्यम्, न [illegible] तादृशसम्बन्धान्तर्भावेन शक्तिरिति न काचिदनुपपत्तिरिति वाच्यम्, एवं सत्यपि संसर्गतात्पर्यज्ञानानुरोधेन तादृशसंसर्गोपस्थित्यपेक्षाया दुर्वारत्वात्।

सम्भव — स्वर्गपदाच्छुद्धसमवायेनैव स्वर्गत्वविशिष्टस्योपस्थितेः । विशिष्टस
मवायेन स्वर्गत्वविशिष्टस्य स्वर्गपदार्थत्वोपगमे लक्षणाप्रसङ्गात् । शुद्धसम
वायेन स्वर्गत्वविशिष्टविषयककामनावतोऽनधिकारप्रसङ्गात् ।

मीमांसकास्तु—

"अहरहः सन्ध्यामुपासीत" इत्यादौ नित्यतया निष्फले
सन्ध्योपासनादाविष्टसाधनत्वस्यायोग्यत्वेनाऽन्वयासम्भवान्नेष्टसाधनत्वं लिङर्थः ।
यत्र सन्ध्यावन्दनादेरप्यर्थवादोपस्थापितब्रह्मलोकादि त्यादि फलसाधा
नत्वमभ्यान्तरा, यत्र नित्येऽर्थवादादपि न फलोपस्थितिस्तत्रापि फलाभाव
निश्चायकप्रमाणाभावाद् योग्यतासन्देहसम्भवेन फलसाधनत्वप्रत्ययो लिङा
दिना स्यादेव । न च तद्बोधो नोपयोगी — निष्फलतया ज्ञाते चैत्य
वन्दनादौ प्रवृत्तिवारणार्थमिष्टसाधनताज्ञानस्य प्रवृत्तिहेतुत्वावश्यकत्वेन नित्य
विधौ प्रवृत्तिनिर्वाहाय तस्य फलसाधनताबोधकताया आवश्यकत्वादि
ति वाच्यम्, न — 'सन्ध्यामुपासते ये च सततं शसितव्रताः' इति श्रुतौ
'स्नानम्' इति श्रुते कदाचित् यस्य सन्ध्यावन्दनादिविधयत्वेन स्वीय
स यावज्जीवं ब्रह्मलोकावासिफलानुसन्धानस्य निश्चिततयाऽदृष्ट सन्ध्या
वन्दने ब्रह्मलोकावासिसाधनताबोधने तस्य सन्ध्यावन्दने प्रवृत्त्यनि
र्वाहात् । यत्र च नित्ये विशिष्य फलबोधकोऽर्थवादादिर्नास्ति तत्र विधि
प्रत्ययेनेष्टत्वेन फलसाधनताबोधस्य उत्तेजनेष्टविषयतावच्छेदकस्वर्गत्वादि
रूपविशेषधर्मप्रकारेण फलविशेष्यकसाधनताबोधस्याऽनिर्वाहेण प्रवृत्त्य
निर्वाहात् । इष्टसाधनताज्ञानाऽघटितत्वरणस्योपगामित्वात् [?] सन्ध्यावन्द
नादावगत्यगोचरनरकादिसाधनताज्ञानाधीनतद्गोचरद्वेषघटितसामग्र्या एव स
न्ध्यावन्दनादौ प्रवर्तकताया उपगन्तव्यतया नित्यस्थले इष्टसाधनताबो

न च " विश्वजिता यजेत " इत्यत्र विशिष्टफलाश्रवणेऽपि यथा स्वर्गकामपदस्याऽध्याहारेण तत्समभिव्याहारात् विशेषफलानवच्छिन्नस्वर्ग साधनताबोधस्तथानित्यस्थलेऽपि विशेषधर्मानवच्छिन्नस्वर्गसाधनताबोधसम्भवा दुक्तप्रवृत्तिसामग्र्यन्तरकल्पनमयुक्तमिति वाच्यम्, बहुवित्तव्ययाऽऽयास साध्यविश्वजिद्यागे तत्तद्ग्रामपश्वादिफलोद्देशेन प्रवृत्त्यनुपपत्तेस्तद्विधेः स्वर्गफलतात्पर्यनिश्चयात्, सन्ध्यावन्दनादौ चाऽल्पायासमात्रे ग्रामादिफलो द्देशेनापि प्रवृत्त्युपपत्तेस्तद्विधेः स्वर्गपरत्वनिश्चयाऽयोगात्, स्वर्गादिफल कामनारहितैर्मुमुक्षुभिरपि सन्ध्यावन्दनाद्याचरणात् उक्तप्रवृत्तिसामग्रीकल्प नस्यावश्यकत्वाच्च तादृशसामग्रीं विना प्रायश्चित्तादावपि तादृशे प्रवृत्त्य निर्वाहाच्च। न च तत्रापि पापध्वंसस्येष्टसाधनताज्ञानात् प्रवृत्तिर्निर्वहति, सुख दुःखाभावेतरगोचरेच्छायामिष्टसाधनताज्ञानस्य नियमतोऽपेक्षायां निष्फल पापध्वंसस्येष्टत्वासंभवात्। नरकसाधनगोचरद्वेषस्य तद्ध्वंसगोचरेच्छाज नकत्वोपगमेऽस्मत्समभीहितायामिष्टसाधनत्वज्ञानाऽघटितप्रवृत्तिसामग्र्यामविरो धात्, कृतिसाध्यताज्ञानसहितेच्छायाः सन्ध्यावन्दनसामग्रीत्वेऽपि स्वर्गानिच्छोऽपि सन्ध्यावन्दनादौ निर्वाहेण प्रवृत्त्युपपत्तेः।

न च नरकानुत्पाद एव प्रायश्चित्तस्य सन्ध्यावन्दनादेश्च फलमि तीष्टसाधनताज्ञानघटितैव प्रवृत्तिसामग्री, नरकद्वेषवता च तदनुत्पादे निमित्तम् एवंच्छेति तेन नित्यसन्ध्यावन्दनाद्यनुष्ठानमुपपद्यते। अन्यैश्च तन्नानुष्ठीयते इति वाच्यम्, नरकानुत्पादस्य तत्प्रागभावात्मकस्य प्रति योगिविरहप्रसङ्गेन फलत्वाऽसम्भवात्, अत्यन्ताभावस्य प्रतियोगिविरोधि तया कदाचित् पापान्तरेण यस्य नरकं तु स जनित जनिष्यते वा तत्रा त्यन्ताऽसत्त्वात् नित्यत्वेन चोभयोः फलत्वासम्भवात्। योगक्षेमसाधा रणसाधनताश्च गुरुशरीरत्वेन प्रवृत्त्यनुपयोगित्वात्।

यदपि "मण्डलीं कुर्यात्" इत्यादिवाक्यप्रामाण्यवारणायेष्टसाधनत्वस्य विध्यर्थत्वमावश्यकमिति, तदपि न — मण्डलीकरणादिजन्यतद्ध्वंसादिरूपफलेऽपि कदाचित् कस्यचिदिष्टताभ्रमेणेच्छेत्तया मण्डलीकरणादावपीष्टसाधनत्वाऽबाधेनेष्टसाधनत्वविध्यर्थतामतेऽपि तद्वाक्यप्रामाण्यस्य प्रसक्तत्वापत्तेः । 'स्वर्गकामो मण्डलीं कुर्यात्' इति वाक्यजन्यबोधे च स्वर्गकामनाया मण्डलीकरणादिनिष्ठकर्तव्यत्वप्रयोजकत्वभानेन तदर्थबाधेन तद्वाक्याऽप्रामाण्योपपत्तेः ।

न चेष्टसाधनत्वस्य विध्यर्थत्वानुपगमे 'स्वर्गकामो यजेत' इत्यादिवाक्याद्यागादौ प्रवृत्त्यनुपपत्तिः — तत्र स्वर्गोद्देश्यघटितसामग्र्यसंभवात् । यागाद्यभावस्य नरकादिरूपद्विष्टसाधनत्वाभावात् । इष्टसाधनत्वबोधकमानाभावेन तज्ज्ञानघटितसामग्र्या अपि सम्पत्ते दुर्घटत्वादिति वाच्यम्, इष्टसाधनत्वस्य विध्यर्थताविरहेऽपि 'स्वर्गोऽस्माकं न स्वर्गकामनाधीनकृतिसाध्यः' इतीतरबाधकत्वात् स्वर्गकामकृतिसाध्यतान्वयितावच्छेदकतया स्वर्गसाधनत्वस्योक्तविधिजन्यबोधे भानाद्यागादाविष्टसाधनताज्ञानादेव प्रवृत्तिनिर्वाहात् । इत्थं च सन्ध्यावन्दनादौ सन्ध्याकालावच्छिन्नशौचादिकर्मणोऽधिकारो न तु फलकामनापि, अतः फलकामनाशून्यस्यापि शौचादिमतः सन्ध्यावन्दनाकरणं प्रत्यवायजनकम् । फलकामनायास्तत्राधिकारत्वे तच्छून्यस्याऽनधिकारितया तदकरणे न प्रत्यवायः स्यात् । न च मुमुक्षुत्वादेन स्वर्गादिरूपफलकामनेच्छा कदाचिदसम्भवेऽपि नरकाभावरूपफले नियमत एवेच्छा सम्भवतीति न शौचादिमतः सन्ध्यावन्दनाकरणस्य प्रत्यवायजनकत्वानुपपत्तिरिति वाच्यम्, नरकाद्यनुपस्थित्या तदभावाऽज्ञानेन तदिच्छाविरहेऽपत्तेरित्याहुः ।

तदसत् — ध्वंसादेरन्यतमाभावविरोधिताया निष्प्रमाणकत्वात् नरकात्यन्ताभावस्यैव प्रायश्चित्तसन्ध्यावन्दनादेरपरसमभ्यादिष्टसाधनताया

विनिगमकमिति वाच्यम्, क्रियाया बलवदनिष्टाऽसाधनत्वज्ञानस्यापि सद्योवरेच्छाहेतुतया बलवदनिष्टाऽसाधनत्वस्येष्टसाधनत्वविशेषणत्वमते किं यविशेष्यकतत्प्रकारकज्ञानान्तरस्य कल्पनीयतया मतद्वये कल्पनासाम्यात्।

यदि च बलवदनिष्टसाधनत्वज्ञानमेव द्वेषसामग्रीत्वेनेच्छाप्रतिबन्धक न तु तदसाधनत्वज्ञानमिच्छाहेतु ' तदोक्तस्य विशेष्यविशेषणभावे विनि गमकस्य सम्भवेपि विशिष्टस्य वाच्यत्वे श्येने विध्यर्थबाधेन तद्विध-यकश्रुतेरप्रामाण्यप्रसङ्ग इति शक्तिभेदस्य श्येने केवलेष्टसाधनताबोधस्य चोपगम आवश्यक ।

मणिकृतापि तत्र बलवदनिष्टाऽसाधनत्वस्याऽभान लिखितम्। तदभान विशिष्टशक्तिपक्षे न सम्भवति— विशिष्टशक्तेर्विशेषणविनिर्मो केन विशेष्यमात्राऽभासकत्वात्, तत्तद्धर्मप्रकारेण पदार्थविषयकशाब्दबोधे तत्तद्धर्मांशे शक्यतावच्छेदकत्वपर्याप्त्यवगाहिज्ञानस्य हेतुत्वात्, अन्यथा विशिष्टस्वर्गादिवाचकस्वर्गादिपदाद्विना लक्षणा केवलसुखत्वादिप्रकारक शाब्दबोधापत्ते ।

यदि च केवलसुखत्वादिना स्वर्गादिरूपसुखबोधो लक्षणामन्तरेण स्वर्गादिपदादिष्यत एव नेष्यते पर सुखान्तरबोध — तत्र शक्ति विरहादिति शक्यतावच्छेदकतापर्याप्त्यवगाहित्वमनुपयोगीत्युच्यते ' त-दापि बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य शक्यतया श्येन निष्ठवैरिवधसाधनत्वस्य बलवदनिष्टसाधनत्वनियतत्वेन तदसाधनत्वविशि ष्टत्वेन विधिप्रत्ययाऽवाच्यतया सुतरा तत्र विध्यर्थत्वाऽनिर्वाह एव ।

यत्तु श्येनस्याऽदृष्टाद्वारकत्वघटितहिंसालक्षणानाक्रान्ततया बलव द्दुःखाऽजनकत्वमिति मतान्तरम्, तदसत्— तथा हि श्येने सात्त्वि कप्रवृत्तिवारणाय बलवद्दुःखाप्रयोजकत्वज्ञानस्यैव प्रवृत्तिहेतुताया उपग-

न्तर्गततया तस्यैव विध्यर्थताया आवश्यकत्वेन श्येने तद्बाधाच्छ्रुतेरप्रामाण्यप्रसङ्गतादवस्थ्यात्, श्येनस्य हिंसात्वविरहेऽप्यभिचारतया नरकजनकत्वस्य दुर्वारत्वाच्च ।

१

यत्तु " अभिचरन् " इत्यस्य वैरिवधगोचरप्रबलकामनाविशिष्टार्थतया तादृशकामनाविशिष्टस्यैव पुरुषस्य बलवद्द्वेषविषयाजनकत्वरूपबलवदनिष्टाननुबन्धित्वघटकद्वेषानुदयात् तादृशकामनाविशिष्टवृत्तिबलवद्द्वेषविषयाजनकत्वं श्रुतिवाक्यात् प्रत्येतव्यम्, तच्च श्येनेऽबाधितमेव — वैरिवधे उत्कटरागवतस्तज्जन्यनरके बलवद्द्वेषानुत्पत्त्या तादृशनरकस्य वैरिवधोत्कटकामनाविशिष्टवृत्तिद्वेषाऽविषयत्वात्, न चैकदैकत्राऽवर्तमानयोरेकतरपरविशिष्टवृत्तीति मिश्राणा मूलाभिप्रायवर्णनम् तदपि न — बलवद्द्वेषविषयदुःखजनकत्वप्रतियोगिकाभावस्याऽतिप्रसक्ततया बलवद्द्वेषविषयदुःखजनकत्वत्वावच्छिन्नाभावस्य वाच्यतास्वीकारेणान्यपुरुषस्य पुरुषविशेषीयबलवद्द्वेषविषयदुःखजनकत्वाभावस्य प्रत्ययाऽसम्भवात् तादृशदुःखजनकत्वेऽभावे च खण्डशक्तिस्वीकारे विशिष्टशक्तिस्वीकारपरित्यागात् ।

एव यत्रोत्कटरागो यदा तत्रैव नोत्कटद्वेषस्तदा, तज्जन्ये फले उत्कटरागदशायां च तज्जन्यदुःखरूपफलान्तरे उत्कटद्वेषे न किञ्चिद्बाधकमिति वैरिवधे उत्कटरागदशायां श्येनजन्यनरके बलवद्द्वेषो दुरुपपाद एव । अस्तु वा फलविषयोत्कटरागघटिता उपायगोचरोत्कटरागसामग्री, तत्रैव तज्जन्यतया ज्ञाते फलान्तरेऽप्युत्कटद्वेषविरोधिनी तथापि नरकवैरिवधयोरेकतर प्रति श्येनस्य हेतुत्वाग्रहदशायां तयोर्बलवद्द्वेषरागयोर्युगपत् सम्भव एव ।

ननु 'नैकं पर्वतमारोहेत्' इत्यादिवाक्यस्य का गतिः ? तथापि विशिष्य तत्तदनिष्टसाधनत्वस्य विधिप्रत्ययार्थत्वे शक्त्यानन्त्यप्रसङ्गो व्युत्पत्त्यनुपपत्तिश्च ।

अत्र वदन्ति— द्वेषविषयतावच्छेदकस्योपलक्षितनरकत्वस्य च यथासम्भवमनरकत्वावच्छिन्नप्रतियोगिताकाभावकूटे तादृशाभावत्वेनानुगते एवैव विधिप्रत्ययस्य शक्तिः । उपलक्षणीभूतद्वेषविषयतावच्छेदकस्य परित्यागे नरकाद्यसाधनत्वं प्रतीयते । कुत्रचिन्नरकासाधनत्वं कुत्रचिद्रोगासाधनत्वं प्रतीयते इत्यत्र तात्पर्यमेव नियामकम् । प्रतियोगितया प्रकारतया भानात् प्रतियोगितावच्छेदकघटकनरकत्वादौ द्वेषविषयतावच्छेदकत्वस्योपलक्षणतया शक्तिग्रहे भानमविरुद्धम् ।

न च प्रमेयत्वादेरप्युपलक्षणतया भानमविरुद्धमिति प्रमेयत्वादेरुपलक्षणतया नरकत्वाद्यननुगमकत्वं कथं न स्वीक्रियते विनिगमकाभावादिति वाच्यम्, सुखाद्यसाधनत्वस्य विध्यर्थत्वाविरहेण प्रमेयत्वादेः सुखत्वादिसाधारणोक्तरूपस्येतरस्यैव विनिगमकत्वात् । न च तात्पर्याभावात् सुखाद्यसाधनत्वाबोधकत्वोपपत्तौ विध्यर्थत्वेऽपि क्षतिविरह इति वाच्यम्, तस्य विध्यर्थत्वे तत्तात्पर्येणाप्युक्तिकाले 'न भुञ्जीत' इत्यादिप्रयोगापत्तेः ॥

इति तर्कशास्त्रधुरन्धरमहामहोपाध्याय श्रीमद्गदाधर भट्टाचार्यविरचितः

॥ व्युत्पत्तिवादः समाप्तः ॥

॥ श्रीरस्तु ॥

